# पञ्चपरमेष्ठिपूजा.

( श्रीयशोनन्दिकृता )



प्रकाशक,

देवप्पा दुधप्पा आडमुट्टे,

दुधगांव.

कोल्हापूर "जैनेंद्र" छापखाना.

सन १९१५.

वीरनिर्वाण संवत २४४१.

किंमत ४ आणे.

॥ नमः पञ्चपरमेष्ठिभ्यः ॥

## ॥ यशोनन्द्याचार्यकृता पञ्चपरमेष्ठिपूजा ॥



कल्याणकीर्तिकमलाकमलाकरं स-
  च्चर्च्चिदुज्ज्वलमहःप्रकटीकृतार्थम् ।
उच्चैर्निधाय हृदि वीरजिनं विशुध्यै
  शिष्टेष्टपञ्चपरमेष्ठिमहं प्रवक्ष्ये ॥ १ ॥

दीर्घाजवंजवविवर्त्तननर्त्तनर्त्त-
  रात्रिप्रकर्त्तनविकर्त्तनकीर्त्तनश्रीः ।
उन्निद्रसान्द्रतरभद्रसमुद्रचन्द्रः
  सद्यः पुरुर्दिशतु शाश्वतमङ्गलं वः ॥ २ ॥

व्योमांगुलैर्म्मितिमुखं न कृतं न तारा
  धारा घनस्य गणिता धरणी पदैश्च ।
त्वां स्तोतुमुद्यतमतिर्मम नेति धार्ष्ट्यं
  मोक्षाय युक्तिघटको भगवांस्त्वमेव ॥ ३ ॥

सद्वागगोचरभवत्सहजस्वरूप-
  संस्पर्शतोऽमम गिरो मम पुण्यदाः स्युः ।

कौतस्कुतान्यपि जलानि विषच्छिदानि
जायन्त एव हि गरुत्ममणिप्रसङ्गात् ॥ ४ ॥
उच्चैर्भवंतमवलंब्य विधीयमानं
स्तुत्यादिकं किमपि यत्तदिहात्मने स्यात् ।
कृत्वा करेऽङ्कममलं हि विरच्यमानं
नेपथ्यमुत्तमगुणाय निजस्य नास्य ॥ ५ ॥
मोहारिमर्दितमिदं बहुधासमूर्च्छं
विश्वं भवच्चरणदर्शनतः सवित्स्यात् ।
उद्दामपन्नगविषज्वलनप्रतप्त-
स्तार्क्ष्यावलोकनवशाच्छमतां हि यायात् ॥६॥
स्ववासिनीनिकरसुन्दरकर्णसंस्पृ-
ग्नीलोत्पलच्छदमदक्षयकृत्कटाक्षाः ।
कन्दर्पदर्पिनृपजैत्रकणेयतुल्या-
स्त्वय्यापतन्ति न भिदन्ति महोति विश्वम् ७
यद्रोचते सकलजन्मिगणाय वस्तु
तन्नोररीचरिकरीषि चिदेकमूर्तिः ।
सानुग्रहोऽस्यपि न कश्चन रोषवेषः
स्थाने जगज्जनमनःप्रियतामियर्षि ॥ ८ ॥
उद्यद्दिवाकरकरप्रकरप्रचार-
संवारकारिकिरणोत्करभूपुनर्भूः ।

यस्याचले मनसि विस्फुरितः क्रमस्ते
दद्यात्स जन्मतमसस्तु जलांजलिं द्राक् ॥९॥
धन्यावतारमविकारमनन्तसार-
मुद्दारितारिभवकूपमखण्डरूपम् ।
यस्त्वाऽवगच्छति नमत्यपि नौति याति
ध्यायत्यपि स्मरति चारु स एव धन्यः ॥१०॥
अन्ये सुरासुरनरा मकरध्वजेन
नीताः पराभवपदं कुसुमायुधेन ।
कस्त्वां विरोद्धुमतितीव्रशरोऽप्यनल्प-
दावानलोऽम्बुधिमुपस्कुरुते किमेषः ॥ ११ ॥
उत्पद्यते न तव चेतसि मीनकेतुः
संसारसागरतरङ्गविवृद्धिहेतुः ।
चित्तोद्भवोक्तिरिति पुष्पशरे निरर्था
त्वत्तस्ततो विगतसर्वरसप्रसारात् ॥ १२ ॥
सर्वात्मनामनवधिप्रविजृम्भमाण-
मोहानुगुण्यवशविस्मृततत्स्वतानाम् ।
प्रत्यञ्चतः स्वपरवस्तुनिजात्मलाभ-
स्तन्वस्तवैव तत एव भवन्तमीडे ॥ १३ ॥
स्वत्र स्वतः स्वमवगम्य चिदेकलक्ष्यं
स्वस्मै स्वयं दुरितघातिगणं निहत्य ।

निस्सीमबोधदृगनन्तबलप्रमोद-
वृत्तिस्ततोऽसि भगवानमलः स्वयंभूः ॥ १४ ॥
सम्यग्दृशि प्रकृतिसप्तकमुग्रधर्म्मा
देशाखिलव्रतशुभोत्सहनेषु यद्वा ।
सम्यक्त्वघातकमहं निवसन् कचित्त्वा-
मत्रायुषांत्रयमिदं गलितं स्वभावात् १५
साधारणातपमयं च स्वजात्य-ह्रस्व-
निद्रात्रयं नरकयुग्ममसूक्ष्मसूक्ष्मे ।
उद्योततिर्यगुभयानि वमून्कपायान्
क्लैब्यं च योषितमथापरहास्यषट्कम् १६॥
पौंस्नं च मन्युमपि मानमथापि मायां
क्षिप्त्वा क्रमान्नवमचारुगुणे षडंशैः ।
प्रक्षिप्य तत्र दशमे तनुलोभमाद्य-
शुक्लेन निर्दितकषायपदं जगाम ॥ १७ ॥
हत्वापि तत्र समये तदुपान्त्यरूपे
निद्रामपि प्रचलयापरशुक्लतोऽन्त्ये ।
दृग्वृत्चतुष्कमपि धीवृतिपञ्चकं च
प्रत्यूहपञ्चकमपि प्रणिहत्य सोऽर्हन् ॥ १८ ॥
निःस्वेदनिर्मलगुणाङ्गधृते नमस्ते
सत्क्षीरगौररुधिराय मुदा नमस्ते ।

संस्थानमाद्यमपि संहननं श्रिताय
सल्लक्ष्मरूपसुरभित्वनिधे नमस्ते ॥ १९ ॥
तुभ्यं नमोऽप्रमितवीर्यतया युताय
तुभ्यं नमः प्रियहितप्रतिपादकाय ।
तुभ्यं नमः सकलसत्त्वहितङ्कराय
तुभ्यं नमो दुरितसन्ततिमर्दनाय ॥ २० ॥
क्रोशांश्छताष्टकमितानसुमद्रुजाधि-
दौर्भिक्ष्यदुर्गतिहराय नमोऽस्तु तुभ्यम् ।
अप्राणिमारणमहामहिमान्विताय
तुभ्यं नमो जलधराध्वविहारकाय ॥ २१ ॥
वल्भोपसर्गरहिताय चतुर्मुखाय
स्पन्दव्यतीतवरपक्ष्मविलोचनाय ।
अच्छायकायसहिताय समस्तविद्या-
नाथाय निर्गतविवृद्धिनखालकाय ॥ २२ ॥
सर्वार्थसुन्दरजगाद्धितमागधीय-
भाषाय सर्वजनताप्रमदप्रदाय ।
आजन्मसंगतपरस्परसर्वजीव-
वैरापहारकरणाय नमोऽस्तु तुभ्यम् ॥ २३ ॥
सर्वर्त्तुजस्तवकपुष्पफलप्रवाल-
जालं समस्ततरवः प्रवहन्ति यस्मात् ।

यस्मान्मही मणिमयी मुकुरन्दशुद्धा
मन्दानिलोऽयमनुगच्छति यांतमुच्चैः ॥ २४ ॥
आयोजनान्तरमहीं शुभगन्धमिश्रां
निष्पांशुकण्टकतृणोपलकर्करालीम् ।
कुर्वन्ति यस्य दिविजास्तदनुप्रमोदा-
द्गन्धोदकं प्रविकिरन्ति हरेर्निदेशात् ॥ २५ ॥
सत्पद्मरागमणिकेशरशोभमानं
चञ्चत्कनत्कनकनिर्मितचित्रपत्रम् ।
यत्पादपद्मधरणे दिविजाधिराजो
वार्जव्रजं सावधि निक्षिपति स्वभक्त्यै ॥२६॥
यत्रागते भगवति क्षितिरक्षितिः स्या-
त्संपूर्णसस्यफलभारविभूषिता च ।
यन्नामसंस्मृतिवशाच्छिवतात्यवाप्तिः
साक्षात्तदीयचरणन्यसनात्कथं न ॥ २७ ॥
आकाशमाशु विमलत्वमयेत साक्षात्
सर्वा दिशश्च विरजीभवनं व्रजन्ति ।
नैवान्धकारघटना पटुतामियर्ति
यस्मिन्विराजति जगत्युदितप्रतापे ॥ २८ ॥
यं दृष्टुमुत्सुकधियः परमानुरागा-
त्पूतीकृतस्वजनना जननं क्षिपन्तः ।

एतैत तूर्णमिति सर्वसुराः समन्ता-
दाह्वानमाशु रचयन्ति शचीशभृत्याः ॥२९॥
उज्जृम्भमाणविशदोत्कटरत्नभाभि-
र्मार्तण्डमण्डलविखण्डलकार्यखण्डम् ।
यस्याग्रगाम्यरसहस्रविराजमानं
श्रीधर्मचक्रमघसंघनिशुम्भनैकम् ॥ ३० ॥
यद्वारि वारितविपद्विसरे निधीनां
सेवां विधातुमिव तिष्ठति चक्रमुग्रम् ।
सद्दर्पणादिभिरवाप्यपि मङ्गलत्वं
तत्र स्थितैस्तमहमेव नमामि नाथम् ॥३१॥
तत्र प्रसर्पति तरां भवदंगदीप्ति-
स्तस्मादशोकतरुरित्यघशोकहारी ।
तच्छक्तिकारणमयं भवतः प्रसंगः
कार्येणकारणविशेषगुणोऽनुमेयः ॥ ३२ ॥
राजत्यसौ तव पुरः सुरपुष्पवृष्टिः
सौरभ्यभारसुरभीकृतसर्वकाष्ठा ।
उद्घाटिता समवसंसृतिपद्मएव
दृष्टिः समीक्षितुमिमं भगवन्तमुच्चैः ॥ ३३ ॥
एकात्मकोऽप्युरुविधानवलम्ब्य सभ्यान्
नानात्मतां परिणतोम्बुदवारिवागान् ।

आस्यप्रयत्नमनपेक्ष्य तव ध्वनिस्स-
द्वर्णैर्व्यनक्ति शिवमार्गमिनप्रभेव ॥ ३४ ॥
चञ्चत्यनल्परुचिचामरचक्रमुद्य-
द्राकाशशांककिरणप्रकरप्रहासि ।
संवीज्यमानममरैर्भगवद्यशोऽब्धे-
र्भंगावली खलु समुच्छलितातिगौरात् ३५
नाम्नैव सिंहपदवीं वयमुद्धरामः
सिंहस्त्वमेव दुरितेभकदम्बदारी ।
त्वद्विष्टरं हरिभिरूढमितीव भर्म
निर्माणमब्जमणिसंस्कृतमुद्विभाति ॥ ३६ ॥
उच्चण्डचण्डकरमण्डलखण्डनैकं
ब्रह्माण्डमण्डनमखण्डमचण्डमक्ष्णाम् ।
भामण्डलं जगति वः प्रसरीसरीति
विश्वस्य किल्विषतमः प्रजरीहरीति ॥ ३७ ॥
दग्धं जगत्त्रयमिदं ननु येन सोऽयं
चूर्णीकृतः सपदि मोहरिपुर्जिनेन ।
साधारणेतरजयं सुरदुन्दुभिस्ते
प्रीतो जगत्यलविमोद्धयतीति शब्दः ॥३८॥
शुभ्रं यशस्त्रिगुणितं भवतः किमेत-
द्भूत्वागतः किमु विधुस्त्रिविधः पदाप्त्यै ।

मूर्त्तिर्धृता किमुत मुक्तिपथेन साक्षात् ।
छत्रत्रयं तव वितर्कयतीति शिष्टान् ॥ ३९ ॥
वंन्दारुसुन्दरपुरन्दरवृन्दवन्द्य- ।
हृद्यानवद्यपदपद्म तवैव बोधः ॥
अन्तर्व्यतीतमहिमासकलार्थसार्थं ।
कालत्रयानुगतमानयतीह सत्ताम् ॥ ४० ॥
सामान्यसंग्रहकरी दृगसावनन्ता ।
कालत्रयं स्फुटितवस्तु वरीवरीति ॥
जानासि पश्यसि समं समनन्तमत्र ।
नो खेदतेति जयतात्त्वदनन्तवीर्यम् ॥ ४१ ॥
ज्ञानात्परं न खलु शर्म न शर्मतस्त- ।
दैक्ये तयोरपि कथंचन भिन्नभावः ॥
वैभावभावविगमोऽवगमस्य सौख्यं ।
तत्स्यादनन्तमिह ते किमु तद्वदामः ॥ ४२ ॥

कृत्वा घातिविघातमुत्तमतरव्यक्तोज्वलध्यानतः । सूर्यत्स्फूर्तिरिव स्फुटीभवदगाज्ज्योतिः परं केवलम् ॥ उद्यत्केवलचारुलब्धिनवकं संप्राप्य विश्वेश्वरो । जीवन्मुक्तिपदं जगाम जगति प्रख्यातकीर्त्यग्रणीः ॥ ४३ ॥ वाताद्धूतमरित्पतिप्रविलसत्कल्लोललोलाकुलान् । दैन्यंगान् कथमुद्धरे-

यमधुना संसारदावानलात् ॥ इत्यावेशवशा-
न्निबद्धसुकृतोद्रेकोच्छलद्धीः सुधा- । धाराभिः
प्रशमं चकार निकरं भव्यांगिनो यो जिनः ॥
॥ ४४ ॥ अंगोपांगयुतांगबन्धनरसैर्वर्णान् स
संघातकान् । पञ्चाप्याकृतिसंहतीः सुरगतिद्वन्द्वं
च गन्धावुभौ ॥ अष्टस्पर्शशुभाशुभास्थिरयुगं
दुःसुस्वरौ दुर्भगं । प्रत्येकाभ्रगतीतरस्वहतयोः प-
र्याप्तकोच्छ्वासकौ ॥४५॥ वेद्यं चान्यतरं तथा-
गुरुलघुं निर्माणनीचैःकुला- । नादेयान्ययशोद्वि-
सप्ततिरिमाः क्षिप्त्वाऽन्त्यपूर्वक्षणे॥ श्वभ्रायुर्नृगति-
द्वयान्यतरवेद्यादेयपर्याप्तका- । न्सत्पञ्चेन्द्रियजा-
तिबादरयशःकीर्तित्रसान्दुर्भगान् ॥ ४६ ॥ सोच्चै-
रन्वयतीर्थकृच्च चरमे क्षिप्त्वा दशात्रिश्रिता- ।
स्ताः कर्मप्रकृतीरनल्पविलसद्दृग्वित्तिवृत्तित्र-
यः ॥ शैलेश्वर्यमजर्यवर्यमजितः संरुद्धसर्वास्रवो ।
वैषीन्नित्यगतिं नमामि तमलं श्रीसिद्धनाथं मुदा
॥ ४७ ॥स्याद्वादाम्बुधिमन्थनश्रमफलं योगीश्वरा
मन्वते । यद्रूपानुभवं समस्तकरणव्यापारदूरा-
नुगम् ॥ सर्वव्यापि चिदच्छदर्पणपरिस्फूर्यत्त्रि-
कालोच्छल- । द्भावव्यक्तिभवप्रमोदनिलयं सिद्धं

तमुच्चैर्नमः ॥ ४८ ॥ तत्सर्वप्रतिबन्धकप्रविगम-
प्रव्यक्तसम्यक्त्वविद् । दृग्वीर्याण्यवगाहनागुरु-
लघुप्रध्वस्तबाधोध्दुरम् ॥ संजानामि जपामि
संततमभिध्यायामि गायामि तं। संस्तौमि प्रण-
मामि यामि शरणं सिद्धं विशुद्धं प्रभुम् ॥ ४९ ॥

आचारवत्त्वादिगुणाष्टकाढ्यं ।
दशप्रकृष्टस्थितिकल्पदीप्रम् ॥
द्विषट्तपःसंवृतमत्र षड्भि- ।
दावश्यकं सूरिममुं नमामि ॥ ५० ॥

एकादशांगकचतुर्दशपूर्वसर्व- ।
सम्यक्श्रुतेः पठनपाठनपाटवो यः ॥
कारुण्यपुण्यसरिदुद्धसमुद्रचित्त- ।
स्तं पाठकं मुनिमुदारगुणं नमामि ॥ ५१ ॥

अस्नानभूशयनलोचविचेलतैक- ।
भक्तोद्भभुक्त्यरदघर्षणशुद्धवृत्तम् ॥
पञ्चव्रतोद्धसमितीन्द्रियरोधषद् स- ।
दावश्यकोत्तमतरं प्रणमामि साधुम् ॥ ५२ ॥

सद्भक्तिभारनतमस्तकचित्तवृत्ति- ।
मोहादिदोषरहितावगतिप्रवृत्तिः ॥

योऽदः स्तुतिं चरिकरीति चरीकरीति ।
पापानि संसृतिजलं स तरीतरीति ॥ ५३ ॥
इति पठित्वा मण्डलमध्ये पुष्पांजलिं क्षिपेत् ।

स्वसंवेदनपीयूषमयूखस्पृष्टिसंभवं ॥
भुंजानान्परमानंदमाव्हये पंच सद्गुरून् ॥
ॐ ह्रीं पंचपरमेष्ठिनोऽत्रागच्छतागच्छत
संवौषट् आव्हानं ॥ १ ॥

निर्विकल्पं निराबाधं सहजानंदनिर्भरं ॥
पदे तिष्ठंति चिद्रूपे तान्प्रतिष्ठाम्यहं गुरून् ॥
ॐ ह्रीं पंचपरमेष्ठिनोऽत्र तिष्ठत तिष्ठत
ठः ठः प्रतिष्ठापनं ॥ २ ॥

यत्संनिधानमात्रेण पापघारी पलायते ॥
गुणाः सामीप्यमायांति तान्गुरून्सन्निदध्महे
ॐ ह्रीं पंचपरमेष्ठिनोऽत्र मम संनिहिता भवत भवत
वषट् स्वाहा सन्निधापनम् ॥ ३ ॥

॥ अथाष्टकम् ॥

मंजुवारिजकिंजल्कपुंजपिंजरितैर्जलैः ॥
यजामि जिनसिद्धेशसूर्योपाध्यायसद्यतीन् ॥
ॐ ह्रीं पंचपरमेष्ठिभ्यो जलं निर्वपामीति स्वाहा ॥१॥

राजद्राजरजोगजीराजद्गोशीर्षसद्रवैः ॥
यजामि जिनसिद्धेशसूर्योपाध्यायसद्यतीन् ॥
ॐ ह्रीं पंचपरमेष्ठिभ्यो गंधं निर्वपामीति स्वाहा ॥२॥
अक्षतैरक्षतैरक्षशकुनैरिव लक्षितैः ॥
यजामि जिनसिद्धेशसूर्योपाध्यायसद्यतीन् ॥
ॐ ह्रीं पंचपरमेष्ठिभ्योऽक्षतान्निर्वपामीति स्वाहा ३
पुष्पैः सुरभिताशास्यैर्निर्गुणैरपि सद्गुणैः ॥
यजामि जिनसिद्धेशसूर्योपाध्यायसद्यतीन् ॥
ॐ ह्रीं पंचपरमेष्ठिभ्यः पुष्पं निर्वपामीति स्वाहा ४
चारुभिश्चरुभिर्वाष्पैरुच्छलद्भिरिवोष्णयतः ॥
यजामि जिनसिद्धेशसूर्योपाध्यायसद्यतीन् ॥
ॐ ह्रीं पंचपरमेष्ठिभ्यो नैवेद्यं निर्वपामीति स्वाहा ५
विध्वस्तध्वांतधामद्भैः संस्निग्धैः कज्जलध्वजैः
यजामि जिनसिद्धेशसूर्योपाध्यायसद्यतीन् ॥
ॐ ह्रीं पंचपरमेष्ठिभ्यो दीपं निर्वपामीति स्वाहा ६
सुरभीकृतदिग्व्रातैर्धूपधूमैर्जगत्प्रियैः ॥
यजामि जिनसिद्धेशसूर्योपाध्यायसद्यतीन् ॥
ॐ ह्रीं पंचपरमेष्ठिभ्यो धूपं निर्वपामीति स्वाहा ७
आनंदकंदमाकंदचोचमोचादिसत्फलैः ॥
यजामि जिनसिद्धेशसूर्योपाध्यायसद्यतीन् ॥

ॐ ह्रीं पंचपरमेष्ठिभ्यः फलं निर्वपामीति स्वाहा ८

वार्गंधाक्षतकुसुमैर्नैवेद्यैर्दीपधूपफलनिकरैः ॥
अर्घं पंचगुरूणां चरणानुत्तारयामि शिवसिध्यै

ॐ ह्रीं पंचपरमेष्ठिभ्योऽर्घं निर्वपामीति स्वाहा ९

विद्यावतां शमवतां करुणावतां चि- ।
ज्ज्योतिष्मतां गुणवतां प्रभुतावतां च ॥
पद्मावतां शमवतां बृहतां महार्घ्य- ।
मुत्तारयामि चरणान् परमेष्ठिनां सत् ॥

॥ पूर्णार्घ्यं ॥

॥ इति समुदायपूजा ॥

---

## ॥ अथ पृथगिष्टिः ॥

### अर्हत्पूजा.

त्वं सर्वगोऽसि भगवन् मयि नाभवः किं ।
न ज्ञातवाननवधानगतोऽहमेव ॥
आगच्छ नाथ दुरितारिनिवारिकारि ।

यत् दुःखमाप भवदागमनादृतेऽहं ॥ १ ॥

ॐ ह्रां अर्हत्परमेष्ठिन्नत्र एह्येहि संवौषट्

इत्याव्हाननं ॥ १ ॥

आनंदकंद भगवन् महनीयमूर्ते ।
त्वं तिष्ठ तिष्ठ मयि सुंदर सुप्रतिष्ठ ॥
दैन्यं जहामि भवसागरमुत्तरामि ।
सिद्धं प्रसिद्धपदमाशु यतः श्रयामि ॥ २ ॥

ॐ ह्रां अर्हत्परमेष्ठिन्नत्र तिष्ठ तिष्ठ

ठः ठः स्थापनं ॥ २ ॥

त्वत्संनिधीभवनतः प्रपलायमानाः ।
कर्मारयो भिय इवाशु न मामुशंति ॥
अक्षाक्षचेतनकलाः प्रसरंत्यनल्पा ।
मत्संनिधीभव जिनेश कृपां विधाय ॥ २ ॥

ॐ ह्रां अर्हत्परमेष्ठिन्नत्र मम सन्निहितो भव भव

वषट् स्वाहा सन्निधापनम् ॥ २ ॥

॥ अथाष्टकम् ॥

सन्क्षायिकी दृगिव निर्मलतां प्रयाता ।
शुद्धस्वरूपगतवृत्तिरिवातिशीता ॥

सौरभ्यभृद्भृगवदंगमिवोच्चगत्यै ।
जानेऽर्हतः क्रमकजं श्रयते बुधा ये ॥ १ ॥
ॐ ऱ्हां अर्हत्परमेष्ठिने जलं निर्वपामीति स्वाहा ॥

सज्जागुडागरुतरुद्रवचंद्रपांशु- ।
सांगत्यमुत्तममिदं प्रविधाय पूर्णम् ॥
लिंपत्परं निजरसेन जिनक्रमाब्जं ।
श्रीखंडतां दलयितुं खलु गंधसारः ॥ २ ॥
ॐ ऱ्हां अर्हत्परमेष्ठिने गंधं निर्वपामीति स्वाहा ॥

सौरभ्यसारसुरभीकृतदिग्मुखानि
पुंजीकृतान्यमलसत्कलमाक्षतानि ॥
राजंति शुद्धय इव क्षपकस्य बुद्धे- ।
र्बाह्यं तवेक्षितुमधीश समागतास्ते ॥ ३ ॥
ॐ ऱ्हां अर्हत्परमेष्ठिने अक्षतान्निर्वपामीति स्वाहा ॥

सज्जातिपूर्वसुमनःप्रकरः प्रकामः ।
प्रीतिप्रदः प्रथितसौरभभूषिताशः ॥
भात्यर्पितो मधुपसंगमपापभीत्या ।
मन्ये तवेश चरणाश्रयणं करोति ॥ ४ ॥
ॐ ऱ्हां अर्हत्परमेष्ठिने पुष्पं निर्वपामीति स्वाहा ॥

नानार्द्धचंद्रशतरंध्रसुहालफेणी- ।

श्रेणीरसोद्धकलमौदनमोदकाद्यैः ॥
संपूजयामि चरणांश्चरुभिर्जिनेशां ।
ध्वस्तक्षुधां भवदवभ्रमतापशांत्यै ॥ ५ ॥

ॐ ह्रां अर्हत्परमेष्ठिने चरुं निर्वपामीति स्वाहा ॥

स्नेहव्रजेन किमनेन गुणेन किं वा ।
पात्रेण किं जगदधीश किमर्चिषा मे ॥
केनापि नांजनमिदं विगतं प्रदीपं ।
इत्यग्रतो विनमतीव सुवाद्यशब्दैः ॥ ६ ॥

ॐ ह्रां अर्हत्परमेष्ठिने दीपं निर्वपामीति स्वाहा ॥

मृद्वग्निसंगमसमुच्छलितोरुधूमैः ।
कृष्णागरुप्रभृतिसुंदरवस्तुधूपैः ॥
प्रीत्या नटद्भिरिव तांडवनृत्यमुच्चैः ।
कर्मारिदारुदहनं जिनमर्चयामि ॥ ७ ॥

ॐ ह्रां अर्हत्परमेष्ठिने धूपं निर्वपामीति स्वाहा ॥

दिक्कामिनीवदनमुन्मकरंदवृंद- ।
माकंदचोचचयमोचसुदाडिमाद्यैः ॥
शश्वत्फलाय भगवंतमनंतशर्म्म- ।
पीयूषपायिनमुदारफलैर्यजामि ॥ ८ ॥

ॐ ह्रां अर्हत्परमेष्ठिने फलं निर्वपामीति स्वाहा ॥

वार्श्चंदनद्रवसदक्षतचारुपुष्प- ।

नैवेद्यदीपवरधूपफलैरनल्पैः ॥
सद्दर्भगर्भितमहार्घमपूर्व्वदूर्व्व- ।
मुत्तारयामि जिनपं प्रति सप्रमोदं ॥ ९ ॥
ॐ ह्रां अर्हत्परमेष्ठिने अर्घ्यं निर्वपामीति स्वाहा ॥

उत्कीर्णमूर्त्तिरिव मे मनसि प्रभासि ।
कुत्र व्रजामि भवतश्चरणं विहाय ॥
यत्किंचिदस्ति तदिहास्तु तवार्चनेन ।
नान्या गतिर्जिनप मादृशमानवानाम् ॥१०॥
ॐ ह्रां अर्हत्परमेष्ठिने पूर्णार्घ्यं निर्वपामीति स्वाहा ॥

निःस्वेदता यतोऽङ्गे यत्कनत्कनकसन्निभे ।
नित्यंनिःस्वेदताचारुगुणमर्हन्तमर्चये ॥१॥
ॐ ह्रां नित्यंनिःस्वेदत्वगुणसमन्विताय
श्रीजिनाय अर्घ्यं निर्वपामीति स्वाहा ।

रजोमलादिसंस्पृष्टिर्यदङ्गे न प्रजायते ।
तन्नैर्मल्यगुणोद्भूतमहिमानं जिनं यजे ॥ २ ॥
ॐ ह्रां नैर्मल्यगुणान्विताय श्रीजिनाय
अर्घ्यं निर्वपामीति स्वाहा ॥

क्षीरवद्गौरतामाप्तं यदङ्गरुधिरं स्वतः
तत्क्षीरगौररुधिरं श्रीमदर्हन्तमर्च्चये ॥ ३ ॥
ॐ ह्रां क्षीरगौरशोणितान्विताय श्रीजिनाय०

ऋषभं वज्रवद्यत्र नाराचमपि तादृशम् ।
तद्वज्रर्षभनाराचसंहत्यर्हन्तमर्चये ॥ ४ ॥

ॐ ऱ्हां वज्रर्षभनाराचसंहननान्विताय श्रीजिनाय०

मानोन्मानैः प्रमितं ।
विषमाङ्गोपांगवर्जितप्रभवम् ॥
समचतुरस्राकारं ।
त्रिभुवनसारं महामि तव देव ॥ ५ ॥

ॐ ऱ्हां समचतुरस्रसंस्थानान्विताय श्रीजिनाय०

आनन्दितजगदाक्षिं ।
स्फुटतरलावण्यपुण्यजलराशिम् ॥
स्फीतं निरुपमरूपं ।
तं जिनराजं यजामि जयकन्दम् ॥ ६ ॥

ॐ ऱ्हां सौरूप्यगुणान्विताय श्रीजिनाय०

सुरभीकृतदिग्वलयं ।
सुरभिद्रव्यानपेक्षितप्रभवम् ॥
सहजं सौरभ्यामितं ।
यजामि जिनराजमच्छाभम् ॥ ७ ॥

ॐ ऱ्हां सौरभ्यगुणान्विताय श्रीजिनाय०

साष्टसहस्रप्रमितैः ।
सुन्दरतरलक्षणैर्विचित्रागं ॥

जिनपतिमुज्वलयशसं ।
यजामि जगदक्षिपीयूषम् ॥ ८ ॥
ॐ ऱ्हां अष्टाधिकसहस्रलक्षणातिशयसमन्वित्ताय श्रीजिनाय अर्घ्यं निर्वपामीति स्वाहा ॥

यत्सामर्थ्यं सहजं ।
त्रिभुवनमखिलं समुद्धर्त्तुम् ॥
उपकृतसत्त्वविशेषं ।
तदमितवीर्यार्हतश्चाये ॥ ९ ॥
ॐ ऱ्हां अप्रमितवीर्याय श्रीजिनाय अर्घ्यं०

भवहारी सुखकारी ।
शमधारी भुवनचित्तसंचारी ॥
गीःप्रकरः श्रुतिमधुरः ।
करुणाविसरस्तवेज्यते प्रवरः ॥ १० ॥
ॐ ऱ्हां प्रियहितवादिने श्रीजिनाय अर्घ्यं नि०

दासीकृतकमलालय ।
सहजातिशया दशैव तव वपुषः ॥
पूतीकृतभुवनत्रय ।
करुणावरुणालयस्य जीयासुः ॥ ११ ॥
ॐ ऱ्हां सहजदशातिशयप्राप्ताय श्रीजिनाय अर्घ्यं

इन्द्रवज्राछन्दः ।

शताष्टकक्रोशमितप्रदेशे ।
सौभिक्षमक्षीणमनीतिनीति? ॥
यतः प्रजायेत शमङ्गिनां तत् ।
सुभिक्षताकारिजिनं यजामि ॥ १२ ॥

ॐ ह्रां गव्यूतिशतचतुष्टयसुभिक्षक्षेमकारिणे श्रीजि०

सुरासुरव्रातभरं महीयं ।
सोढुं समर्था न भवेदितीव ।
भुवं न पस्पर्श चचार खं य- ।
श्राये तमर्हन्तमनन्तयानम् ॥ १३ ॥

ॐ ह्रां गगनगामिने श्रीजिनाय०

निस्त्रिंशसत्त्वैरपि जातु जीवा- ।
स्त्वयि स्थिते त्रातरि धर्ममूर्त्तौ ॥
न हन्यमानास्तदजीवबाधा- ।
तिशीतिमासं जिनमर्चयामः ॥ १४ ॥

ॐ ह्रां प्राणिवधवारकाय श्रीजिनाय अर्घ्यं नि०

न क्षीणमोहस्य तवास्ति भुक्ति- ।
रसातवेद्यस्य विपाकनाशात् ॥
अनन्तशर्मामृतभुक्तितृप्ते- ।
स्तद्भुक्त्यभावं जिनमर्चयामः ॥ १५ ॥

ॐ ह्रां कवलाहारवर्जिताय श्रीजिनाय अर्घ्यं नि०

नैवेतयो नाप्युपसर्गवर्ग-।
स्त्वयि प्रवृद्धप्रतपत्प्रतापे ॥
तद्धेतुनाशादुपसर्गनाशा-।
त्तिर्शांतिमाप्तं जिनमर्चयामः ॥ १६ ॥

ॐ ह्रां उपसर्गरहिताय श्रीजिनाय अर्घ्यं नि०

चिच्छेद तद्घातिचतुष्टयं यो।
जगाम चानन्तचतुष्टयत्वम् ॥
न्यायागता ते चतुरास्यता त-।
त्समर्चयामश्चतुरास्यमाप्तम् ॥ १७ ॥

ॐ ह्रां चतुरास्याय श्रीजिनाय अर्घ्यं नि०

समस्ततत्तत्प्रतिबन्धकाना-।
मपायतो दृष्टचराचरत्वात् ॥
अशेषविद्येश्वरतामवाप्तं।
यजामि यज्यं जिनराजमुच्चैः ॥ १८ ॥

ॐ ह्रां सर्वविद्येश्वराय श्रीजिनाय०

अच्छाच्छमुच्चैःपरमादिशब्द-।
मौदारिकं दिव्यमहोमयांगं ॥
धत्से तदच्छायगुणाधिराजं।
जिनं जितारातिमुदारमर्चे ॥ १९ ॥

ॐ ह्रां निश्छायशरीराय श्रीजिनाय अर्घ्यं॰

यतस्त्वदीयं नयनं निमेष- ।
व्यतीतमस्मादतिमानुषः स्याः ॥
जीवन्नपि प्राप पदं च दैवं ।
तन्निर्निमेषत्वमितं यजे त्वाम् ॥ २० ॥
ॐ ह्रां पक्ष्मस्पन्दरहिताय श्रीजिनाय॰

वपुर्मलप्रक्षयतो नखानां ।
शिरोरुहाणां विगता च वृद्धिः ॥
न कृष्णनिस्त्रिंशविवर्द्धनं ते ।
यजे तदासं नखकेशसाम्यम् ॥ २१ ॥
ॐ ह्रां समप्रसिद्धनखकेशाय श्रीजिनाय॰

दुर्घातघातिक्षयतः प्रभूतैः ।
पूतातिशायैर्दशभिः प्रकृष्टैः ॥
संवर्द्धमानप्रकटप्रतापा ।
जिनाः श्रियं दिश्युरमी शमेषाम् ॥२२॥
प्रवर्त्तितां द्वादशयोजनानि ।
देवैस्तु भाषां तव मागधीयां ॥
सर्वार्थसार्थां जगतः शुभां गा- ।
मितो यजे श्रीजिनराजमुच्चैः ॥ २३ ॥
ॐ ह्रां अर्द्धमागधीभाषासमन्विताय श्रीजिनाय॰

सिंहीसुतं स्पृशति पुत्राधिया कुरंगी ।
व्याघ्रीतनूजमपि गौर्वरटां बिडाली ॥
मैत्रीं भजन्ति भविनः प्रविहाय वैरं ।
त्वत्तेजसा तमतिशायमितं यजे त्वाम् २४

ॐ न्हां सर्वजनमैत्रीविधायकाय श्रीजिनाय अर्घ्यं०

निःशेषकालिकफलच्छदपुष्पवृन्दैः ।
पूर्णा भवन्ति तरवो भवतोऽतिशीतेः ॥
नेत्रैरिवोद्गततरैर्जिनमीक्षितुं त्वां ।
चाये तमाप्तमतिशायगुणं जिनेशम् २५

ॐ न्हां सर्वर्त्तुफलपुष्पादिसम्पूर्णमहीरुहातिशय-
प्राप्ताय श्रीजिनाय०

क्षितिर्भवेद्रत्नमयीमनोज्ञा ।
यदाश्रयात्सन्मुकुरन्दशुद्धा ॥
त्वत्संगमात्कस्य न शुद्धिरेत-
त्संसूचयन्तीव जिनं तमर्चे ॥ २६ ॥

ॐ न्हां आदर्शरत्नतुल्यभूम्यतिशयप्राप्ताय
श्रीजिनाय०

यतः प्रसत्तेर्जनताविशेषा-
न्मुदावली मेदुरचारुचित्ता ॥
नैक्षेत वै पद्यमिहानवद्या ।

समर्चयामो जिनकुञ्जरं तम् ॥ २७ ॥

ॐ ऱ्हां सर्वजनोत्पादकसदातिशयप्राप्ताय श्रीजि०

स्पृष्टेरिवाप्रमितपुष्पितवल्लरीणां ।

गङ्गातरङ्गनिकरोच्छलितच्छटौघैः ॥

पूतीभवंस्तव विहारमनुप्रयाति ।

वातो यतस्तदतिशीतिमितं यजे त्वाम् ॥

ॐ ऱ्हां अनुकूलपवनातिशयप्राप्ताय श्रीजिनाय०

उत्सारितप्रखरकण्टककर्करालि- ।

पांशूत्करार्जुनगणं जगतीविभागम् ॥

आयोजनान्तरमरं रचयन्ति देवाः ।

सौरभ्यमिश्रमतिशीतिमितं यजे त्वाम् ॥

ॐ ऱ्हां उपशामितधूलिकण्टकतृणकीटकशर्करोपल-

भूभागविधायिसुगन्धवातातिशयप्राप्ताय श्रीजिनाय०

सद्गन्धबन्धुरपयःकणवृन्दवृष्टि- ।

मस्तीभवन्मधुकरप्रकरप्रचाराम् ॥

हर्याज्ञया विशदमेघकुमारदेवा- ।

श्चक्रुत्यनल्पमतिशीतिमितं यजे त्वाम् ॥

ॐ ऱ्हां स्तनितकुमारकृतगन्धोदकवृष्ट्यातिशयप्राप्ताय

श्रीजिनाय अर्घ्यं नि०

त्वत्पादयोरभिमुखीभवनत्वमात्रा- ।

त्पासं वपुर्विमलहेममयं विचित्रम् ॥
सेवाकृतेः फलमनल्पमितीव पद्मा- ।
स्तिष्ठन्ति यत्पदतले जिनमर्चये तम् ३१

ॐ ह्रां हेमकमलोपरि संचरणातिशयप्राप्ताय श्री०

निःसाध्वसाऽस्मि सफलाऽस्मि निरीतिरस्मि ।
देव त्वदीयचरणन्यसनप्रभावात् ॥
इत्युच्छलत्खगरुतच्छलतः क्षितिर्वा ।
विज्ञापयत्यतिशयं तमितं महामि ॥३२॥

ॐ ह्रां फलभारनम्रसर्वधान्यातिशयप्राप्ताय श्री०

शरत्सरस्सत्सलिलायमानं ।
निरभ्रमभ्रं विरजस्त्वमेति ॥
त्वयि स्थिते दुर्दिनता वराकी ।
किं स्थातुमीष्टे सुकृतैकमूर्त्तौ ॥ ३३ ॥
अन्तर्बहिर्मलहतस्तव सर्वगस्य ।
मन्ये लसद्धवलिमा प्रथितोऽस्त्यनल्पः ॥
राजत्यशेषककुभाममलत्वमुच्चै- ।
र्यत्त्वत्पदाज्जिनभवंतामिमं यजे तम् ३४

ॐ ह्रां निर्मलाकाशादिगातिशयप्राप्ताय श्रीजिनाय०

आगच्छतागच्छत तूर्णमद्य ।
सुरासुराः श्रीसुरपाज्ञयेति ॥

आकारयन्ति त्रिदशा मिथोऽन्यान् ।
यतः प्रभावाज्जिनमर्चये तम् ॥ ३५ ॥
ॐ ह्रां सुराह्वानातिशयप्राप्ताय श्रीजिनाय०
स्फुरत्प्रभामण्डलमण्डिताशं ।
सहस्रतीव्रारमधर्मविच्छित् ॥
यक्षोढमङ्गल्याधिकं यदग्रे ।
सद्धर्मचक्रं जिनमर्चये तम् ॥ ३६ ॥
ॐ ह्रां प्राप्ताग्रगामिधर्मचक्रातिशयसमन्विताय
आलब्दकेतुघटचामरसुप्रतिष्ठ- ।
तालातपत्रमिति मंगलमष्टधैव ॥
भूत्वाऽऽगतं जिनपदाब्जनतिं विधातुं ।
तन्मंगलाष्टकयुतं जिनमर्चये तम् ३७
ॐ ह्रां मङ्गलाष्टकप्राप्ताय श्रीजिनाय०
इति चारु चतुर्दश देवकृता- ।
न्विशदातिशयानधिरूढपदः ॥
जगतां दुरितं हरतादखिलं ।
तनुतादतनुश्रियमीशजिनः ॥ ३८ ॥
ॐ ह्रां देवकृतचतुर्दशातिशयविभूषिताय श्रीजि०
त्वत्पादसुन्दरकरप्रकरप्रसंगाद् ।
वृक्षोऽप्ययं दहति निर्भवलोकशोकम् ॥

मार्त्तण्डपादधरणादिवदारु सूर्य- ।
कान्तं महामि सदशोकतरुं तमेनम् ३९

ॐ ह्रां प्राप्ताशोकवृक्षप्रातिहार्याय श्रीजिनाय॰

अन्तर्न मान्त इव निर्जरभक्तिभागा ।
मन्ये पतन्ति कुसुमानि दिवो जिनाग्रे ॥
सौमुख्यमर्च्यचरणं प्रतिसौमनस्या- ।
दासानि तत्कुसुमपातपतिं यजे तम् ४०

ॐ ह्रां सुरपुष्पप्रातिहार्यसमन्विताय श्रीजिनाय॰

भव्यान्तरुद्भवतमः प्रजरीहरीति ।
या योजनं सहजतः प्रसरीसरीति ॥
भाषाविशेषमखिलं च दरीधरीति ।
यद्गीस्तदंघ्रियजनं प्रचरीकरीमि ४१

ॐ ह्रां दिव्यध्वनिप्रातिहार्यसमन्विताय श्रीजि॰

त्रिषष्टिप्रमारातिविध्वंसवृद्धा ।
नरीनर्त्ति संभूय किं वा विशुद्धिः ॥
समुत्क्षिप्यते या शुभैर्दक्षयक्षै- ।
श्चलच्चामरालीमितं तं महामः ॥ ४२ ॥

ॐ ह्रां चतुःषष्टिचामरवीज्यमानाय श्रीजिनाय॰

कनकभूधरगर्वविडम्बकं ।
कनकरत्नसमूहविनिर्मितम् ॥

हरिधृतं हरिभिश्च समुद्धृतं ।
परिमहामि जिनं श्रितमासनम् ॥४३॥
ॐ ह्रां सिंहासनस्थितजिनदेवायार्घ्यं नि०

जनताभवसप्तकदर्शयिता ।
तरुणारुणकोटिविडम्बयिता ॥
अघहारियदीयविभानिकरः ।
प्रयजामि जिनं तमुदारतरम् ॥ ४४ ॥
ॐ ह्रां भामण्डलविभूषिताय श्रीजिनाय०

सुरदुन्दुभयः सुखदध्वनय- ।
स्तव किं जयसूचनकृत्कवयः ॥
दिवि चारु चकासति कोणहता ।
दिविजैः सुयजामि जिनं प्रथिताः ४५
ॐ ह्रां देवदुन्दुभिप्रातिहार्यविराजिताय श्रीजि०

अधुना रिपुवारणकारणता ।
जगदातपवारणकारणता ॥
महतापि मयाऽऽतपवारणता ।
हरतीति जिनातपवारणता ॥ ४६ ॥
ॐ ह्रां छत्त्रत्रयविभूषिताय श्रीजिनाय०

सकलावगमप्रतिबन्धकता ।
क्षयतोऽन्दहतेरिव विस्फुरिता ॥

रविभा यदखण्डितबोधतति- ।
स्तमिनं प्रयजामि हताघवृतिः ॥ ४७ ॥
ॐ ह्रां अनन्तज्ञानसमन्विताय श्रीजिनाय.

सकलेक्षणरोधनकर्महति- ।
प्रविजृम्भितकेवलदृष्टिगतिः ॥
जगदीक्षितमेव तया भवता ।
प्रयजे तदनन्तदृशं जिनपम् ॥ ४८ ॥
ॐ ह्रां अनन्तदर्शनसमान्विताय श्रीजिनाय०

विशदीकृतमोहवृतिक्षयता ।
प्रकटीभवदाकुलताव्ययता ॥
तदनन्तसुखं भगवन्तमिनं ।
प्रयजामि जिनं जगदङ्गिहितम् ॥ ४९ ॥
ॐ ह्रां अनन्तसुखसमन्विताय श्रीजिनाय.

शतखण्डितदुर्जयविघ्नवृति- ।
व्रजविच्छुरितामितवीर्यततिः ॥
यदपेच्छितवित्सकलार्थविभि- ।
स्तदनन्तबलं प्रयजामि जिनम् ॥ ५० ॥
ॐ ह्रां अनन्तबलसमान्विताय श्रीजिनाय.

प्रोता गुणैस्तव पदोत्कटरागरक्तै- ।
स्संवर्तिता जिन भवद्गुणरत्नमाला ॥

कण्ठे कृता प्रकृतिसुन्दरमोक्षलक्ष्मीं ।
स्वाराज्य मामपि समुत्कयति प्रमोदात्
श्रीमज्जिनं विजितदुर्जयदुष्कषायं ।
नानागुणाभरणभूषितकान्तकायम् ॥
नित्यं यजन्त्वपि जयन्तु मनस्यवन्तु ।
ध्यायन्तु नित्यकुशलावलिलिप्सवो ये ॥

ॐ ह्रां षट्चत्वारिंशद्गुणाविराजमानाय श्रीजिनाय पूर्णार्घ्यं निर्वपामि स्वाहा ॥

अथ जयमाला.

जय जय गुणसुन्दर नमितपुरन्दर
धर्म्मधुरन्धर विश्वपते ।
उदितोदितबोध हतारिविरोध
कृतानययोगनिरोध नमस्ते ॥ १ ॥
जय घातितघातिविपक्ष नमस्ते
निर्जितरागद्वेष नमस्ते ।
मोहमहीधरवज्र नमस्ते
पुष्पशरानलनीर नमस्ते ॥ २ ॥
परपरणतिपरिहार नमस्ते
ज्ञानविलासनिवास नमस्ते ।
निस्पृहतैकनिधान नमस्ते

वृद्धसमाधिसमृद्ध नमस्ते ॥ ३ ॥
परमौदारिकदेह नमस्ते
शुद्धगुणव्रजगेह नमस्ते ।
व्यक्तीकृतशिवमार्ग नमस्ते
करुणासागर देव नमस्ते ॥ ४ ॥
ब्रह्मपदप्रमदाद नमस्ते
मिथ्यामतरजनीन नमस्ते ।
अशरणशरणशरण्य नमस्ते
जगदानन्दनचन्द्र नमस्ते ॥ ५ ॥
जनताजनिताहितेश नमस्ते
संभववृक्षकुठार नमस्ते ।
दुष्टजराव्रततीभ नमस्ते
कालदवानलमेघ नमस्ते ॥ ६ ॥
धीरशरीरगभीर नमस्ते
सर्वातिशयनिबद्ध नमस्ते ।
निर्विकार वररूप नमस्ते
योगिमनोम्बुज सूर्य नमस्ते ॥ ७ ॥
दुर्गतिसन्ततिहरण नमस्ते
करुणाजीवनवाक्य नमस्ते ।
दुर्नयकलभमृगेन्द्र नमस्ते

दुष्टभवाम्बुन्धिपार नमस्ते ॥ ८ ॥

भव्यभविव्रजभव्य नमस्ते
दृग्विद्वीर्यसुखेश नमस्ते ।
वृद्धसद्बुद्धिमुनीश नमस्ते
सर्वव्यापिचिदङ्ग नमस्ते ॥ ९ ॥

हरिहरनिकरध्येय नमस्ते
लोकालोकज्ञेय नमस्ते ।
गरिममहिमनिधिनाथ नमस्ते
यशोनन्दिगणिराज नमस्ते ॥ १० ॥

वसन्ततिलकावृत्तम्

मोक्षस्फुरत्सुखफलप्रदकल्पवृक्षः
पापापहारिजगदेकयदीयपक्षः ।
यैः स्तूयते जिनपतिः स्वयमर्च्यते वा
तैरीक्ष्यते जनुरगाधसमुद्रपारम् ॥ ११ ॥

ॐ ह्रां अर्हत्परमेष्ठिने महार्घ्यं निर्वपामीति स्वाहा ॥

स्रग्धरावृत्तम्

आयुःपुष्टिं करोतु प्रहरतु दुरितं मङ्गलालीं
धिनोतु । सौभाग्यं वृद्धिमुच्चैर्नयतु वितरता-

द्वैभवं शं चिनोतु ॥ रामा पद्माभिरामा रमयतु
सुयशः स्पष्टयित्वा तनोतु । पुत्रं पौत्रं प्रतापं
प्रथयतु भवतामार्हती भक्तिरुच्चैः ॥

( इत्याशीर्वादः )

" ॐ ऱ्हां अर्हत्परमेष्ठिने नमः " इत्यनेनाष्टोत्तर-
शतं जात्यादिपुष्पैर्जाप्यं देयम् ॥ १ ॥

इत्यर्हत्परमेष्ठिनः पूजनविधानम् ।

## अथ सिद्धपूजनमुपक्रम्यते

वसन्ततिलकावृत्तम्

दूरीकृतप्रकृतिबन्धनतः स्वतन्त्राः
पूतीकृतत्रिभुवनोत्तमनाममन्त्राः ।
भ्रान्तिच्युता अपि मदीयहृदि प्रतिष्ठां
कर्तुं कथंचन समागमनं विधेयम् ॥ १ ॥

ॐ ऱ्हीं सिद्धपरमेष्ठिन् अत्रागच्छागच्छ संवौषट् ॥

ज्ञाने स्थितिं वरिवृतीति भवादृशानां

मुक्तात्मनां ललितनित्यकलाभृतानाम् ।
तस्मादितीह विशदां विनतिं विदध्म-
स्तिष्ठन्तु मद्धिमलविद्यपि हृद्यविद्याः ॥२॥

ॐ ह्रीं सिद्धपरमेष्ठिन् अत्र तिष्ठ तिष्ठ ठः ठः ॥

उत्सारिताशभवपाशविकारनाश
शुद्धप्रकाश निभृताशय चिद्धृताश ।
मत्सान्निधीभव निरङ्गचिदङ्गसङ्ग
सिद्धेश सिद्धपदवीं झटिति श्रये यत् ॥३॥

ॐ ह्रीं सिद्धपरमेष्ठिन् अत्र मम सन्निहितो
भव भव वषट् ॥

दृष्ट्यावृतिनाशप्राप्तविकाश क्षतभव-
पाश त्रासलस- । तत्त्वश्रद्धान प्रभवदमान
ज्ञानज्ञाताशेषरसम् ॥ गंगाहृतनीरैश्चन्द्र-
शरीरैस्तर्जितहीरैः श्रितधीरै- । र्यायज्मः
सिद्धं सर्वविशुद्धं बुद्धमरुध्दं गुणरुध्दम् ॥१॥

ॐ ह्रीं सिद्धपरमेष्ठिने जलं निर्वपामीति स्वाहा ॥

ज्ञानावृतिरोधव्यक्तसुबोध क्षिप्तविरोध
व्यक्तपतिं । चञ्चच्चिदुदार त्यक्तविकार
क्षतसंहारप्राणधृतिम् । चन्दननिर्यासैर्न-

द्रनवासैश्चन्द्राविलासैर्घुसृणाढ्यै- । र्यायज्मः सिध्दं सर्वविशुध्दं बुध्दमरुध्दं गुणरुद्धम् ॥ २ ॥

ॐ ह्रीं सिद्धपरमेष्ठिने चन्दनं निर्वपामीति स्वाहा ॥

ईक्षणवृतिवारप्रकृतिनिवारस्फुरितापार- सुदृष्टिपरं । वरचिद्यापारं दलिताकारं शमतागारं शर्म्मकरम् ॥ कलमाक्षतवृन्दै- र्नयनानन्दैर्मधुरिमकन्दैर्वरशंदै-र्यायज्मः सिद्धं सर्वविशुध्दं बुध्दमरुध्दं गुणरुध्दम् ॥३॥

ॐ ह्रीं सिद्धपरमेष्ठिने अक्षतान् निर्वपामीति स्वाहा ॥

प्रत्यूहव्यूहक्षिप्तसदूहप्रकटितवीर्यसमूह- भवं । भवबन्धनमुक्तं सद्गुणयुक्तं कालाभुक्तं भव्यभवम् । गुञ्जितरोलम्बैःकञ्जकदम्बैर्जा- तिकदम्बैः सन्नीपै- । र्यायज्मः सिद्धं सर्वविशुद्धं बुद्धमरुध्दं गुणरुद्धम् ॥ ४ ॥

ॐ ह्रीं सिद्धपरमेष्ठिने पुष्पं निर्वपामीति स्वाहा ॥

क्षुण्णीकृतनामस्पर्ध्दकधामस्फूर्जितसूक्ष्म- त्वातिगिरं । निजविद्यालक्ष्यं क्षितपरकक्षं

स्वस्थितिपक्षं नित्यसुखम् ॥ कलमौ-
दनमोदकफेणीश्रेणीनैवेद्यैरिति निरवद्यै- ।
र्यायज्मः सिध्दं सर्वविशुध्दं बुध्दमरुध्दं
गुणरुध्दम् ॥ ५ ॥

ॐ ऱ्हीं सिध्दपरमेष्ठिने नैवेद्यं निर्वपामीति स्वाहा ॥

क्षिप्तायुःस्पर्ध्दकचिद्गुणवर्ध्दकलसदवगाह-
नशक्तिधरं । शश्वन्निर्दूषणमदुदयभूषण-
भवगतिपूषणमस्तपरम् ॥ सम्भृतसंस्नेहै-
स्तेजोदेहैर्गुणगणगेहैः सद्दीपै- । र्यायज्मः
सिध्दं सर्वविशुध्दं बुध्दमरुध्दं गुणरुध्दम् ६

ॐ ऱ्हीं सिध्दपरमेष्ठिने दीपं निर्वपामीति स्वाहा ॥

गोत्रक्षयसम्भवसन्ततसम्भवसदगुरुलघु-
तारूपपरं । सर्गमसर्ग्गमपीतमनुक्षणमु-
ज्झितसर्ग्गासर्ग्गभरम् ॥ कृष्णागुरुधूपैः
सुरभितभूपैर्धूमैःस्पृष्टहरिद्रूपै- । र्यायज्मः
सिद्धं सर्वविशुध्दं बुध्दमरुध्दं गुणरुध्दम् ७

ॐ ऱ्हीं सिध्दपरमेष्ठिने धूपं निर्वपामीति स्वाहा ॥

सातासातस्पर्द्धकविगमव्यक्ताव्याबाधै-

कसुखं । संकल्पानल्पविकल्पसमुज्झित-
चित्तमुदारमुपेक्षितखम् ॥ आम्रैरुच्चैरुन्न-
ममोचैश्चंचच्चोचैः क्रमुकाद्यै- । र्यायज्मः
सिद्धं सर्वविशुध्दं बुध्दमरुध्दं गुणरुध्दम् ८
ॐ ऱ्हीं सिध्दपरमेष्ठिने फलं निर्वपामीति स्वाहा ॥

गङ्गाजीवननन्दनचन्दनलसदक्षतवरपु-
ष्पौघै- । श्चारुतरैश्चरुभिः स्फुटदीपैर्धूप-
फलैः कुशदूर्वाद्यैः ॥ पापविदारकमुज्झि-
तकारकमर्घ्यमधीशैः कृतकृत्यं । यायज्मः
सिद्धं सर्वविशुध्दं बुध्दमरुध्दं गुणरुद्धम् ९
ॐ ऱ्हीं सिध्दपरमेष्ठिने अर्घ्यं निर्वपामीति स्वाहा ॥

चम्पकमालावृत्तम्

लक्षविवर्तैर्ग्रन्थिरथैका
किं बहुजल्पनमत्र वितन्मः ।
सिद्धपतेर्यजनादिह किञ्चि-
न्नान्यदुदारतरं भवहारि ॥ १० ॥
ॐ ऱ्हीं सिध्दपरमेष्ठिने पूर्णार्घ्यं निर्वपामीति स्वाहा ॥

वसन्ततिलकावृत्तम्

यस्या दुराग्रहवियुक्तचिदात्मिकाया

माहात्म्यतः सकलवस्तु सधर्मराशिः ।
ज्ञानं विवर्णयति चारु यथार्थतत्त्वं
सम्यक्त्वशक्तिमशरीर यजे गतं त्वाम् ॥
ॐ ऱ्हीं सम्यक्त्वगुणविशिष्टाय सिध्दपरमेष्ठिनेऽर्घ्यं
निर्वपामीति स्वाहा ॥ १ ॥

सामान्यसङ्गतविशेषसमस्तवस्तु-
चक्रं प्रतिक्षणनवीभवनत्वमाप्तम् ।
निर्लेपमेव विशिनष्टि समृद्धितो या
तज्ज्ञानशक्तिसमलंकृतसिध्दमर्चे ॥ २ ॥
ॐ ऱ्हीं सम्यग्ज्ञानशक्तिसमन्विताय सिध्दपरमेष्ठिनेऽर्घ्यं
निर्वपामीति स्वाहा ॥

सत्तावलोकनमभावितभेदभाव-
माहुर्जिना दृशमपास्तविनिश्चयत्वम् ।
वस्तु व्यनक्ति सकलं सहवित्समं या
तद्दृष्टिशक्तियुतसिध्दपतिं महामः ॥३॥
ॐ ऱ्हीं अनंतदर्शनगुणसमन्विताय सिद्धपरमेष्ठिनेऽर्घ्यं
निर्वपामीति स्वाहा ॥

यस्याः प्रभाववशतः सकलार्थसार्थं
जानाति पश्यति समं सुविदीक्षणं च ।

नोत्पद्यते किल मनागपि खेदभाव-
स्तद्वीर्यशक्तियुतसिध्दपतिं महामः ॥४॥
ॐ न्हीं अनन्तवीर्यसमन्विताय सिध्दपरमेष्ठिनेऽर्घ्यं
निर्वपामीति स्वाहा ॥

यस्याः प्रतापवशतः करणावबोधाः
संस्प्रष्टुमेव न विभुं विभवो भवन्ति ।
सत्केवलावगमनार्यममेयरूपं
तत्सूक्ष्मतागुणपसिध्दपतिं यजामः ॥५॥
ॐ न्हीं सूक्ष्मत्वगुणसमन्विताय सिध्दपरमेष्ठिनेऽर्घ्यं
निर्वपामीति स्वाहा ॥

यस्य प्रसत्तिवशतः स्वनिवासदेशे
स्थानं प्रदातुमसितात्मगुणस्य शक्ताः ।
नैवं मिथो व्यतिकरोद्भवखेदता स्यात्
यायज्मि सत्तदवगाहनशक्तिसिध्दम् ॥६॥
ॐ न्हीं अवगाहनगुणसमन्विताय सिध्दपरमेष्ठिनेऽर्घ्यं
निर्वपामीति स्वाहा ॥

नीचैः पतन्ति रसवद्गुरवो भवन्तो
यद्यर्कतूलवदपि भ्रमणं लघिष्ठाः ।
यस्य प्रसादवशतो नियतस्थितिः स्या-
त्सिध्दं यजे तदमलागुरुलघ्वनन्तम् ७

ॐ ह्रीं अगुरुलघुगुणसमन्विताय सिद्धपरमेष्ठि-
नेऽर्घ्यं निर्वपामीति स्वाहा ॥

संसारसागरविवर्त्तनजातखेद-
विश्रान्तये यदुरुवृत्तिमिहाचचार ।
अन्तर्व्यतीतमिति तत्फलभूतशर्म
निर्बाधमाप्तममलं प्रयजामि सिद्धम् ॥८॥

ॐ ह्रीं अव्याबाधगुणसमन्विताय सिध्दपरमेष्ठि-
नेऽर्घ्यं निर्वपामीति स्वाहा ॥

त्वद्धर्मसुन्दरसरित्पतिमन्थनेन
व्यक्तीकृतो वरगुणामृतपूर एषः ।
भक्त्या पिबन्ति ननु कर्णपुटेन येऽच्छा-
स्तेषामियं भवति जन्मनिदाघशान्तिः ९

ॐ ह्रीं अष्टगुणविशिष्टाय सिध्दपरमेष्ठिनेऽर्घ्यं
निर्वपामीति स्वाहा ॥

## अथ जयमाला

शार्दूलविक्रीडितच्छन्दः

ये दृष्टिप्रतिबन्धकव्यपगमं कृत्वा निमित्तद्वया-
त्सम्यग्ज्ञानमुदारवृत्तमधिकं प्रापुर्विशुध्द्युत्सवाः ।
स्वात्मानं सनिमित्तभावविरहं ध्यात्वाऽऽत्मना

स्वात्मनि । क्षिप्त्वा कर्मरजांस्यगुः शिवपदं तेभ्यो वपुर्भ्यो नमः ॥ १ ॥

भुजंगप्रयातवृत्तम्

अखण्डप्रचण्डप्रतापस्वभावं
निराकारमुच्चैरनन्तस्वभावम् ।
स्वभावानुभावं क्षतोद्यद्विभावं
स्वभावाय वन्दे वरं सिद्धभावम् ॥२॥

महामोहसन्दोहसंरोहदारं
विकारप्रसारप्रहारं विचारम् ।
अनल्पं विकल्पं च संकल्पकल्पं
त्यजन्तं यजे सिद्धमुध्दूतजल्पम् ॥३॥

विकायं विमायं सदा निष्कषायं
ज्वलद्रागरोषादिदोषव्यपायम् ।
अलोकं च लोकं समालोकयन्तं
भजे सिद्धनाथं शमुद्योतयन्तम् ॥४॥

जराजन्ममृत्युव्यपेतं गुणेतं
समुध्दूतकर्माणमर्थैः समेतम् ।
वियोगं विरोगं वियोगव्यतीतं
भजे सिद्धनाथं सुशर्मप्रतीतम् ॥५॥

लसद्द्रव्यपर्यायरूपं धरन्तं

यथाख्यातचारित्रमुच्चैश्चरन्तम् ।
चिदानन्दकन्दं जगत्तापकन्दं
भजे सिद्धनाथं मुदे वृद्धमन्दम् ॥६॥
गतध्यानमालं स्फुरच्चिद्विशालं
दितारातिजालं विनष्टान्तकालम् ।
मुनिध्येयरूपं त्रिलोकैकभूपं
यजे सिद्धरूपं सुखागाधकूपम् ॥७॥
अमेयप्रमेयप्रमायिप्रमाणं
सहायानपेक्षं विधूतप्रमाणम् ।
अनेकं सदेकं प्रसर्पद्विवेकं
भजे सिद्धमेकं गुणारामसेकम् ॥८॥
जगत्पापवल्ली सदाह्वा हुताशं
महःसूरभापूरसंपूरिताशम् ।
असम्बन्धबन्धं शिवालीनिबन्धं
भजे सिद्धमुद्यद्विशेषप्रबन्धम् ॥९॥
भवाभावभावव्यपायस्वभावं
भवाभावभावप्रभावप्रभावम् ।
स्वरूपप्रतिष्ठं प्रतिष्ठत्प्रतिष्ठं
भजे सिद्धनिष्ठं गरिष्ठं वरिष्ठम् ॥१०॥
कलासिन्धुसिन्धुस्त्रिलोकैकबन्धुः

समाध्यब्धिचन्द्रः सतां नामचन्द्रः ।
अनन्द्यः सुनन्द्ये यशोनन्दिवन्द्यः
शिवायास्तु सिद्धः प्रसिध्दः समृध्दः ११

आर्या

इति वरसिद्धगुणस्तुतिममलां हृदि यो
निधाय पठतीह । तमलं कमला विमला
निर्वृतिरपि ववरीत्यनघम् ॥ १२ ॥

भुजंगप्रयातवृत्तम्

यजध्वं भजध्वं बुधाः संमनुध्वं
निधध्वं हृदिध्वं विशुद्धैकसिध्दम् ।
चिदानन्दकन्दं स्वरूपोपलब्धिं
यदीह ध्वमन्तं निनीषध्वमेनं ॥१॥

ॐ ह्रीं सिद्धपरमेष्ठिने पूर्णार्घ्यं निर्वपामीति स्वाहा ॥

वसन्ततिलकावृत्तम्

दीर्घायुरस्तु शुभमस्तु सुकीर्तिरस्तु
सद्बुध्दिरस्तु धनधान्यसमृध्दिरस्तु ।
आरोग्यमस्तु विजयोऽस्तु महोऽस्तु पुत्र-
पौत्रोद्भवोऽस्तु तव सिध्दपतिप्रसादात् २

इत्याशीर्वादः

ॐ ह्रीं श्रीं अर्हं अनाहतविद्याय सिध्दाधिपतये नमः

इति मन्त्रेण जात्यादिपुष्पैरष्टोत्तरशतं जाप्यं विधेयम् ॥

॥ इति सिध्दपरमेष्ठिपूजनविधानम् ॥

---

## अथाचार्यपरमेष्ठिपूजनविधानं प्रारभ्यते

स्रग्धरावृत्तम्

क्षिप्त्वा पक्षाक्षपक्षाक्षततकुमताः क्षान्ति-
सन्ताक्षितक्ष्मा। दक्षैणाक्षीकटाक्षक्षयकरकुश-
ला लक्षितालक्ष्यरक्षाः ॥ अध्यक्षेक्षेक्षिताक्षः
क्षतदुरुपदयोमोक्षलक्ष्मक्षराक्षि। क्षिप्रं क्षि-
णवन्तु साक्षात्क्षितिमिहगणपाः क्षुक्षितः
क्षेमवृक्षाः ॥ १ ॥

इति पुष्पांजलिं क्षिपेत् ॥

वसन्ततिलकावृत्तम्

सत्यक्षताक्षितविपाक्षितपक्षकक्षा-
श्रित्कक्षवृक्षपरिरक्षणदक्षपक्षाः।
आचारताधरणधारणवर्यधुर्या
आगच्छताद्यगणपा दुरितापहाराः ॥२॥

ॐ ह्रूं आचार्यपरमेष्ठिन् अत्रागच्छागच्छ संवौषट्

इत्याह्वानम् ॥

षट्त्रिंशदुत्तमगुणेषु कृतप्रतिष्ठा-
श्चित्तीकृतैकचिदवाप्तमहत्प्रतिष्ठाः ।
स्वास्वोपकारकुशला इति यत्प्रसिद्धा-
स्तिष्ठन्तु मय्यपि ममाघहृते गणेशाः ॥३॥

ॐ ह्रूं आचार्यपरमेष्ठिन् अत्र तिष्ठ तिष्ठ ठः ठः ।

स्थापनम् ॥

साम्योत्तमं स्वमविराध्य परोपकारं
निष्कारणं कुरुथ चार्विति कौशलं वः ।
सान्निध्यमाध्यहरणं जगतामशेषं
तत्सन्निधीभवत मेद्य गणाधिराजाः॥४॥

ॐ ह्रूं आचार्य परमेष्ठिन् अत्र मम सन्निहितो
भव भव वषट् सन्निधापनम् ॥

आकारिता ननु भवन्त इहागताः स्युः
संस्थापिताः स्थितिकृतोऽप्यथ सन्निधीताः ।
प्राघूर्णवृत्तिरुचिता गणपा इतीव
प्रक्षालयामि सलिलैः प्रथमात्क्रमौ वः ॥१॥

ॐ ह्रूं आचार्यपरमेष्ठिने जलं निर्वपामीति स्वाहा

कर्पूरपूरवरकुंकुममिश्रिताङ्ग-

गोशीर्षवर्षिततरद्रवलेपनेन ।
युक्तीकरोमि गणिपादमहो सतां कः
कर्त्तव्य एव करणीयविधिर्विचारः ॥२॥
ॐ ह्रूं आचार्यपरमेष्ठिने चन्दनं निर्वपामीति स्वाहा ॥
अक्षारिकक्षहतिपक्षनिबध्दकक्षाः
क्षुण्णा न च क्व च न मोहसुखैर्विपक्षैः ।
इत्यक्षतानि भवतां पदयोः पुरस्तात्
पुञ्जीकरोमि भवदक्षतवृत्तिलब्ध्यै ॥३॥
ॐ ह्रूं आचार्यपरमेष्ठिने अक्षतान् निर्वपामीति स्वाहा
मुक्ता भवन्तमतिकर्कशबाणराजी
कामेन विश्वजयिना प्रकृतावलेपात् ।
तच्छीलतो गणप पुष्पवपुः किमासी-
त्पुष्पव्रजोऽर्पिततरश्चरणं विभाति ॥४॥
ॐ ह्रूं आचार्यपरमेष्ठिने पुष्पं निर्वपामीति स्वाहा ॥
एतादृशं हि चरणं मदलब्धपूर्वं
सन्तापमाप बहुशं करधारणं च ।
बाष्पच्छलादिति समुच्छलतीव दीर्घं
त्वामर्पितश्चरुरुदाररसान्नपूर्णं ॥ ५ ॥
ॐ ह्रूं आचार्यपरमेष्ठिने नैवेद्यं निर्वपामीति स्वाहा ॥
स्नेहाद्दतेस्मादिदमर्चिरुपैति नास्थां

युष्माकमर्चिरुदितोदितवृध्दिमाप्तम् ।
तत्कीदृशं ननु दिदृक्षुरितीव दीप-
व्रातः परिस्फुरित वः पदमार्पितोऽयम् ६
ॐ ह्रूं आचार्यपरमेष्ठिने दीपं निर्वपामीति स्वाहा ॥

हुत्वा स्वमप्यगुरुभिः सुरभीकृताशै-
रग्नौ समुच्छलितसंभृतवृन्दधूमैः ।
संधूपयामि चरणं शरणं शरण्यं
पुण्यं भवभ्रमहरं गणिनां मुनीनाम् ७
ॐ ह्रूं आचार्यपरमेष्ठिने धूपं निर्वपामीति स्वाहा ॥

अस्मत्समर्पणकृते भवतः फलं कि-
मस्माकमुत्तमफलं भवतः प्रसङ्गः ।
उत्तारितानि गणिपादमलिङ्कणैर्वे-
त्युच्चैर्वदन्ति सहकारफलादिकानि ॥८॥
ॐ ह्रूं आचार्यपरमेष्ठिने फलं निर्वपामीति स्वाहा ॥

वार्गन्धतन्दुललतान्तचरुप्रदीप-
धूपैः फलैरपि यजामि भवत्पदाब्जम् ।
अर्घ्यार्घ्यदानविधितो महती प्रतिष्ठा
पूज्यादरो हि महतामिति मङ्गलत्वम् ९
ॐ ह्रूं आचार्यपरमेष्ठिने अर्घ्यं निर्वपामीति स्वाहा

कारुण्यपुण्यहृदयान् दलिताघसंघा-

निर्ग्रन्थताव्रतधरान् श्रुतसिन्धुमग्नान् ।
सूरीन् यजन्ति च भजन्ति धरन्ति चित्ते
ते जन्मसागरमपारमिहोत्तरन्ति ॥ १० ॥

ॐ ह्रूं आचार्यपरमेष्ठिने पूर्णार्घ्यं निर्वपामीति स्वाहा

आचारमाचरति पञ्चविधं मलोज्झं
यश्चारयत्यपि तथोपदिशत्यवश्यम् ।
आचारवत्त्वगुणमुत्तममत्र सूरे-
स्तं यायजीमि सलिलप्लवचन्दनाद्यैः ११

ॐ ह्रूं पञ्चाचारगुणान्विताय आचार्यपरमेष्ठिने
अर्घ्यं निर्वपामीति स्वाहा ॥

पूर्वाणि यो नव दशाथ चतुर्दशापि
कल्पांकितव्यवहृतिश्रुतमप्यवैति ।
आधारवान् जरगरीत्यपि सोऽस्ति सूरि-
राधारवत्त्ववरधर्ममिमं महामः ॥ ॥१२॥

ॐ ह्रूं आधारवत्त्वगुणप्राप्तायाचार्यपरमेष्ठिने
अर्घ्यं निर्वपामीति स्वाहा ॥

पञ्चप्रभिद्भृतपुनश्चरणं समस्तं
जानाति पश्यति ददात्यपि यः प्रवीणः ॥
सूरिः स एष भवति व्यवहारधारी

यायज्मि तद्गुणविभूषणयुक्तसूरिम् १३

ॐ ह्रूं व्यवहारित्वगुणसमृद्धायाचार्यपरमेष्ठिने
अर्घ्यं निर्वपामीति स्वाहा ॥

यश्चर्करीति परिचारकतामभायं
शश्वद्विचक्षणतरः क्षपकस्य साधोः ।
सूरिः प्रकारक उदारमतिर्भवेत्स
धर्मप्रकारकमितं तमितं महामि ॥ १४ ॥

ॐ ह्रूं प्रकारकत्वगुणसमन्वितायाचार्यपरमेष्ठिने
अर्घ्यं निर्वपामीति स्वाहा ॥

आलोचनोद्यतमुने ऋजुचित्तवृत्ते-
राविष्करोति गुणदोषमनार्जवस्य ।
तद्दोषमेव स भवेत्किल सूरिराया-
पायोपदिक्तमिह धर्म्ममितं यजे तम् १५

ॐ ह्रूं आयापायोपदेशकत्वगुणविशिष्टायाचार्य-
परमेष्ठिने अर्घ्यं निर्वपामीति स्वाहा ॥

योऽन्तर्निगूढमतिचारमनार्ज्जवस्य
साधोर्बहिश्चरिकरीति सुकौशलेन ।
उत्पीलको गणधरस्स भवत्युदार-
स्तद्धर्मभूषणविभूषितमर्चये तम् ॥ १६ ॥

ॐ ह्रूं उत्पीलकगुणसमन्वितायाचार्यपरमेष्ठिने
अर्घ्यं निर्वपामीति स्वाहा ॥

आलोचितानपि निजान् क्षपकेण दोषान्
नो यः परिश्रवति पीतरसानिवोच्चैः ।
सूरिर्भवेत्सदपरिस्रवदिव्यमूर्ति-
श्चाये मुदा तदपरिस्रवतायुतं तम् १७
ॐ ह्रूं अपरिस्रवतागुणविशिष्टायाचार्यपरमेष्ठिने
अर्घ्यं निर्वपामीति स्वाहा ॥

क्षुत्तृट्परीषहविमर्दनदुःखितस्य
साधोस्तदस्मृतिकृते सुकथां प्रकुर्यात् ।
निर्वाणको गणपतिः स भवत्युदारो
निर्व्वापकत्वगुणभूषितमर्च्चये तम् ॥ १८
ॐ ह्रूं निर्वापकगुणसमन्वितायाचार्यपरमेष्ठिने
अर्घ्यं निर्वपामीति स्वाहा ॥

कार्पासकैरजिनवल्कलरोमजातैः
कौशेयकैर्द्विविधसंयमहारिचैलैः ।
अस्पृष्टमङ्गमनिशं विमलं यदीयं
तन्नग्नतागुणगणाधिपमामहामि ॥१९॥
ॐ ह्रूं नग्नत्वगुणविभूषितायाचार्यपरमेष्ठिने
अर्घ्यं निर्वपामीति स्वाहा ॥

औद्देशिकं तदशनं श्रमणान् कृतं य-
दुद्दिश्य यस्य सततत्यजनं तदीयम् ।
मुक्ताङ्गसङ्गममतस्य तमर्चयाम
औद्देशिकाशनपरित्यजनात्मसूरिम् २०

ॐ ह्रूं उद्देशिकाहारत्यागकारिणे आचार्यपरमेष्ठिने अर्घ्यं निर्वपामीति स्वाहा ॥

यः संस्करोति वसतिं कुरुतेऽत्र वा स्वे-
त्यापादयत्यपि जिनैः कथितास्त्रयोऽमी ।
शय्याधरास्तदशनत्यजनाच्छवृत्तिं
सूरिं यजामि निरपेक्षितबोधवृत्तिम् २१

ॐ ह्रूं शय्याधराशनविवर्जितवृत्तये आचार्यपरमेष्ठिने अर्घ्यं निर्वपामीति स्वाहा ॥

राजप्रधानपृतनापतिकोटपाल-
मंत्र्यादिकं प्रभुतयाश्रितापिण्डहानम् ।
यश्चर्करीति गणपः स तु राजकीय-
पिण्डोज्झनस्तमिममेव महाम्यमायम् ॥

ॐ ह्रूं राजपिण्डग्रहणविवर्जितवृत्तये आचार्यपरमेष्ठिने अर्घ्यं निर्वपामीति स्वाहा ॥

आवश्यकानि षडपि स्वयमाचरेद्य-

श्रेक्रीयते गुणगुरोः स्वगुरोर्विनीतिम् ।
सूरिर्भवेत्स कृतिकर्मधरस्सुवृत्तो
यायज्मि तं निरलसोल्लसदच्छचित्तम् २३

ॐ ऱ्हूं कृतिकर्मनिरताय आचार्यपरमेष्ठिने अर्घ्यं
निर्वपामीति स्वाहा ॥

औद्देशिकाद्यशनहानसमुद्यतात्मा
निश्चेलतास्थितियुतो गुरुभक्तियुक्तः ।
भूरिप्रभो व्रतसुरोपणयोग्यमूर्ति-
स्स स्याद्गणी तमिममाशु महामि शश्वत्

ॐ ऱ्हूं व्रतारोपणयोग्याय आचार्यपरमेष्ठिने अर्घ्यं
निर्वपामीति स्वाहा ॥

आर्यार्यिकाव्रजनकामलपाठकेभ्यः
श्रेष्ठत्वमाचरणतोऽपि समश्नुते यः ।
तं ज्येष्ठतोर्जितगुणव्रजराजमान-
मानंदभूरिगुणसूरिमिमं महामः ॥ २५ ॥

ॐ ऱ्हूं सर्वज्येष्ठाय आचार्यपरमेष्ठिने
अर्घ्यं निर्वपामीति स्वाहा ॥

आगांसि यानि मनसा वपुषा कृतानि
वाचा च तान्यनलसो निचरीकृतीति
यस्तं प्रतिक्रमणरक्षणपण्डितान्तः

सूरिं यजामि जिनधर्मविकाशनेनम् २६

ॐ ह्रूं प्रतिक्रमणपण्डितायाचार्यपरमेष्ठिने अर्घ्यं
निर्वपामीति स्वाहा ॥

संमोहसम्भवसदास्थितिशर्मतादि-
हानाय तिष्ठति पुरं प्रतिमासमेकम् ।
यस्तं विदारितदुराशयमोहजालं
मासैकवासिवृषपं गणपं महामि ॥ २७ ॥

ॐ ह्रूं मासैकवासिने आचार्यपरमेष्ठिने अर्घ्यं
निर्वपामीति स्वहा ॥

वर्षाविवृद्धिकरमासचतुष्कमास्त
एकत्र यो बहुविधाङ्गिनिकायपापात् ।
यायज्मि तं विशदवार्षिकयोगयुक्तं
पूतं गणेश्वरमुदारमहोनिधानम् ॥ २८ ॥

ॐ ह्रूं वार्षिकयोगयुक्ताय आचार्यपरमेष्ठिने अर्घ्यं
निर्वपामीति स्वाहा ॥

चित्ताक्षनिर्ज्जयकृतेऽनशनं तपो य-
श्चर्कर्ति सुन्दरचतुर्विधभुक्त्यभावम् ।
धीरं सदानशनसद्व्रतभूषिताङ्गं
यायज्मि तं गपणतिं सदुपेक्षितांगम् २९

ॐ ह्रूं अनशनतपोयुक्तायाचार्यपरमेष्ठिने अर्घ्यं
निर्वपामीति स्वाहा ॥

द्वात्रिंशदिद्धकवलोत्तमवलभनं य-
देकोत्तरादिकवलैः परिहीयमानम् ।
योऽल्पाशनं चरिकरीति विनिद्रतायै
सूरिं तमाहृतमिताशनमामहामि ॥२०॥

ॐ ह्रूं अवमौदर्यतपोयुक्तायाचार्यपरमेष्ठिने अर्घ्यं
निर्वपामीति स्वाहा ॥

नानान्नदातृगतिपात्रगृहादिगाद्यः
संकल्पतोऽशनमुपैति समिक्षुदक्षः ।
आशापिशाच्यपहृतेर्व्रतवृत्तिसंख्या-
संधारकं गणपतिं प्रमहाम्यहं तम् ॥२१॥

ॐ ह्रूं वृत्तिपरिसंख्यानसहितायाचार्यपरमेष्ठिने अर्घ्यं
निर्वपामीति स्वाहा ॥

षट्सद्रसेच्छुदधितैलपयोघृतानां
त्यागं करोत्यशकलाच्छकलत्वतो वा ।
यः स्वांगकर्शनकृते रसहानकारि-
सूरिं यजामि तमुदारचिदब्धिमग्नम् ॥

ॐ ह्रूं रसपरित्यागपरिपुष्टायाचार्यपरमेष्ठिने अर्घ्यं
निर्वपामीति स्वाहा ॥

निर्जन्तुके स्त्र्यविषये मनसो विकार-
हेतूज्झिते गृहगुहागतलेऽगिशून्ये ।
शय्यासने स्त इति यस्य विदे विविक्त-
शय्यासनं तमिह चारु यजामि सूरिम् ।

ॐ ह्रूं विविक्तशय्यासनतपोयुक्तायाचार्यपरमे-
ष्ठिने अर्घ्यं निर्वपामीति स्वाहा ॥

ग्रीष्मे गिरौ श्रितशिलः शिशिरे वनस्थः
प्रावृष्यनोकहमितः सशवादिशय्यः ।
क्लेशं करोति वपुषो स्वसुखाविदेऽग-
क्लेशव्रतं गणपतिं तमिमं महामि ॥३४॥

ॐ ह्रूं कायक्लेशतपोयुक्तायाचार्यपरमेष्ठिने अर्घ्यं
निर्वपामीति स्वाहा ॥

पापं यदर्जितमकृत्यकृतेश्चकृत्या
कृत्या विशोधयति यस्तदिदं स्ववित्या ।
प्रायो मनस्तपसि निष्ठितसूरिमुच्चै-
र्द्धिःपञ्चभेदकलिते तमिमं महामि ३५

ॐ ह्रूं प्रायश्चित्ताचारायाचार्यपरमेष्ठिने अर्घ्यं
निर्वपामीति स्वाहा ॥

जातं कषायविषयिप्रकरावरोधा-

दृग्ज्ञप्तिवृत्तिषु च तद्वति सादरत्वम् ।
यं पञ्चधेति विनयं विनयेद्धसूरिं
यायज्मि निर्मथितमानकषायमुच्चैः ॥३६॥

ॐ ह्रूं विनयनिरताय आचार्यपरमेष्ठिने
अर्घ्यं निर्वपामीति स्वाहा ॥

आचार्यमुख्यदशकस्य दुराशयत्वं
शारीरपीडनमपि प्रविभेत्तुमुच्चैः ।
यस्य प्रवृत्तिरुदिता गणपं सुवैया-
वृत्त्याश्रितं परियजामि वृषैकमूर्तिम् ३७

ॐ ह्रूं वैयावृत्तिसंयुक्ताय आचार्यपरमेष्ठिने
अर्घ्यं निर्वपामीति स्वाहा ॥

ज्ञानावृतिप्रभृतिदुःपरिणामवृध्यै
साम्नायकं पठति पाठयति श्रुतं यः ।
पृच्छन् स्मरन्नुपदिशत्यपि धर्मभेदं
स्वाध्यायधारकगणाधिपमर्चये तम् ३८

ॐ ह्रूं स्वाध्यायधारकाय आचार्यपरमेष्ठिने
अर्घ्यं निर्वपामीति स्वाहा ॥

बाह्यान्तरङ्गविविधोपाधिचक्रहानं
गुप्त्याश्रितः स्वमलिदेहमवेक्षमाणः ।

यश्चर्करीति भवपाशसमुच्छिदे तं
व्युत्सर्गधारकगणाधिपमामहामि ॥ ३९॥
ॐ ह्रूं व्युत्सर्गसहिताय आचार्यपरमेष्ठिने
अर्घ्यं निर्वपामीति स्वाहा ॥

आर्त्तं च रौद्रमपि दुःप्रणिधिं निहत्य
दौर्गत्यकर्तनविकर्तनमेति धर्म्यम् ।
शुक्लं च यश्चिदनुभूतिविभूतिभूति-
ध्यानी गणी वरमहाः परियज्यते सः ४०
ॐ ह्रूं ध्याननिष्ठाय आचार्यपरमेष्ठिने अर्घ्यं
निर्वपामीति स्वाहा ॥

रागाद्यबाधवरवित्यनुभूतिमात्रं
दृग्ज्ञप्तिवृत्तितपसां त्विति चैकवृत्ति ।
सामायिकं तदिति षड्विधमाचरेद्यः
सामायिकी गणधरो ननु यज्यते सः ४१
ॐ ह्रूं सामायिकसहिताय आचार्यपरमेष्ठिने
अर्घ्यं निर्वपामीति स्वाहा ॥

द्विर्द्वादशप्रमिततीर्थकृतां गुणानां
संकीर्तनं प्रमदतः स्तवनं तु षोढा ।
यश्चर्करीति नियतं प्रहताघसङ्घं

स्तोताऽर्हतां गणपतिः किल मह्यते सः ४२

ॐ ह्रूं स्तवनिरताय आचार्यपरमेष्ठिने अर्घ्यं
निर्वपामीति स्वाहा ॥

दुष्कर्मसान्द्रगहनज्वलनायितानां
नाम्नः सतां भगवतामिति वन्दना स्यात्
यस्तां चरत्यनुदिनं जिनवन्दनाकृ-
च्छ्रीमद्गणाधिपमिमं प्रमहाम्यहं तम् ४३

ॐ ह्रूं वन्दनानिरताय आचार्यपरमेष्ठिने अर्घ्यं
निर्वपामीति स्वाहा ॥

ईर्योत्तमार्थदिनमासचतुष्टयाब्द-
पक्षक्षपासु कृतदोषविशोधनाङ्गम् ।
नित्यं प्रतिक्रमणमाचरति स्वयं यः
सूरिं प्रतिक्रमधरं तमिमं महामि ॥४४॥

ॐ ह्रूं प्रतिक्रमणनिरताय आचार्यपरमेष्ठिने
अर्घ्यं निर्वपामीति स्वाहा ॥

शिखरीणी

प्रतिक्रान्त्या पूर्वार्जितविविधकर्माणि दलयं-
स्तथालोचं कुर्वन्नुदयदुरुकर्मव्रजभिदे ।
भविष्यत्कर्माच्छिन्निखिलविकृतित्यागकरणं
चरेत्प्रत्याख्यानं य इह गणपं तं परियजे ४५

ॐ ह्रूं प्रत्याख्याननिरताय आचार्यपरमेष्ठिने
अर्घ्यं निर्वपामीति स्वाहा

मन्दाक्रान्ता

निद्रातन्द्राजिदुदितबलः सूत्रवित्स्वक्षपक्षो
मोक्षेक्षोऽन्छोऽचलदवदवो द्व्यंगुलासान्तरांघ्रिः
तिष्ठत्यूर्ध्वज्ञ इत समतो लंबिताजानुदोर्यो
गण्यंगोत्सर्गमघमलसंहारमासं तमर्चे ॥४६॥
ॐ ह्रूं कायोत्सर्गसङ्गतायाचार्यपरमेष्ठिने अर्घ्यं
निर्वपामीति स्वाहा

सुन्दरीछन्दः

सूरिभूरिगुणरत्नमालिकां ।
यः करोति हृदये सदोदये ॥
सोऽयमेति परमेष्ठितापदं ।
सद्भिरुत्तमदृशा विलोक्यते ॥ ४७ ॥
ॐ ह्रूं आचार्यपरमेष्ठिने पूर्णार्घ्यं
निर्वपामीति स्वाहा ॥

## अथ जयमाला

आर्याछन्दः

अघसङ्घतिमिरनिकर- ।
प्रलयीकरणप्रचण्डमार्त्तण्डान् ॥

सततं स्तवीमि सूरीन् ।
गुणभूरीनुज्वलाचरणान् ॥ १ ॥

छन्दः

मन्दानोकहकन्दानन्दनकन्दामन्दानंदा-
दान् । शुंभद्दम्भारम्भानिशुंभनलंभसमा-
रम्भारम्भान् ॥ अच्छस्वच्छसमुद्धलदच्छ-
लमुक्तालम्बप्रालम्बां- । स्तानाचार्यानार्ज-
वधुर्यान् वर्यानीडेऽमात्सर्यान् ॥१॥ द्वेषा-
द्वेषविशेषविवर्जिततर्जितदूषणसद्वेषान् ।
सारासारविचारविवेचनकौशलबालमरा-
लाभान् ॥ पञ्चाचारसमाचरणक्षममुक्ति-
कटाक्षसुलक्ष्यङ्गां- । स्तानाचार्यानार्जव-
धुर्यान्वर्यानीडेऽमात्सर्यान् ॥ २ ॥ शब्द-
ब्रह्माजिह्मविमर्शनलक्षितानित्यब्रह्मत्वान् ।
उद्यद्वादिविवादविमर्दनविद्याद्योतितशि-
वमार्गान् ॥ विद्वद्वृन्दहृदाम्बुधिवर्धनशा-
रदराकाशीताभां- । स्तानाचार्यानार्जव-
धुर्यान्वर्यानीडेऽमात्सर्यान् ॥ ३ ॥ तीव्र-
क्रोधज्वलनज्वालामालानिर्मूलनमेघान् ।
गर्वोर्वीधरखर्वणवज्रांल्लोभारण्यज्वलनाभान्

मायामेयव्रततिव्रातव्रश्चनमाद्यद्दन्तीन्द्रां-।स्तानाचार्यानार्जवधुर्यान्वर्यानीडेऽमात्सर्यान् ॥ ४ ॥ धैर्यौदार्योर्जितगाम्भीर्यान् करुणासागरचेतस्कां-। स्तारुण्याप्रविकर्तनकर्तनतेजस्कानपि सौम्याङ्गान् ॥ धर्मप्राणत्राणसमीपानुत्सारितदुरितव्राता- । स्तानाचार्यानार्जवधुर्यान्वर्यानीडेऽमात्सर्यान् ॥ ५ ॥ नन्दनचन्दनगङ्गाभङ्गानर्धसुधाकरपादालीन् । मुक्ताहारसुधालिप्तराभवकारकसद्धितवागालीन् ॥ सर्वारम्भपरिग्रहमुक्तानुक्ताशेषपदार्थौघां-। स्तानाचार्यानार्जवधुर्यान्वर्यानीडेऽमात्सर्यान् ॥ ६ ॥ सातासातातीतानितान्तप्रीतिप्रीतिभरप्रीतान् । सर्पविसर्पत्कंदर्पज्वरदर्पनिवार्यगदात्मांगान् ॥ ध्यानज्ञानध्वस्तसमस्तश्रद्धावैरिप्रतिपक्ष -। स्तानाचार्यानार्जवधुर्यान्वर्यानीडेऽमात्सर्यान् ॥ ॥ ७ ॥ प्राणिप्राणत्राणकरानपि विकृतक्षितौ निस्त्रिंशां-। श्चौर्यप्रोज्झितसद्धृदयानपि विश्वमनोनिधिसञ्चौरान् ॥ त्यक्ताशेषग्रन्थभरानपि सञ्चितरत्नत्रयवित्तां-। स्ता-

नाचार्यानार्जवधुर्यान्वर्यानीडेऽमात्सर्यान्
॥ ८ ॥ सप्तभयानवलोकितवृत्तीनघ-
भीरूनुरुचिद्बोधान् । परमोपेक्षासंस्थित-
चित्तान् योगिजनादृतसान्निध्यान् ॥ षट्-
त्रिंशद्गुणभूषणभूषितसद्देहान्निरलङ्कारां- ।
स्तानाचार्यानार्जवधुर्यान्वर्यानीडेऽमात्स-
र्यान् ॥ ९ ॥

मात्सर्यमुत्सार्यविचार्यकार्य- ।
मार्याः सदाचार्यनुतिं चरन्तु ॥
औदार्यगाम्भीर्यसुधैर्यवीर्य- ।
वर्योर्जिताजर्यशिवप्रसत्त्यै ॥

शार्दूलविक्रीडितच्छन्दः

उद्दीपीकृतसन्मतास्त्वममतानिर्ग्रन्थताभृ-
द्व्रताः।पञ्चाचाररता महोदययुता विद्या-
वतां सम्मताः॥ आज्ञैश्वर्यभिता महंनुत-
नता निःशेषबुद्धश्रुता। आचार्या जनता-
हिताः शमगताः पुष्युर्यशोनन्दिताम् ॥

॥ महार्घ्यम् ॥

तेजस्तीव्रगभस्तिचण्डमचमत्कारैकसं-
वारकं । कीर्तिं शारदशुभ्रभानुधवलां

निःशेषदिग्व्यापिनीम् ॥ आयुर्दीर्घतरं नि-
रामयवपुर्लीलाधमर्णीकृत-। श्रीदं श्रीनिक-
रं करोतु भवतामाचार्यभक्तिः सताम् ॥

॥ इत्याशीर्वादः ॥

ॐ ह्रूं आचार्यपरमेष्ठिने नमः इत्यनेन
अष्टोत्तरशतं जाप्यं जात्यादिपुष्पैः ॥

इत्याचार्यपरमेष्ठिपूजनविधानम्

---

## ॥ अथ पाठकपूजनविधानम् ॥

भूतेंद्विन्दुकलेन्द्रियेपुनवमाभ्रर्षिवसिसप्ता-
म्बरा- । म्भोध्यम्भोधिभयर्त्तुवेदगतिवस्वे-
काक्षराणि श्रुते ॥ अष्टाष्टाष्टनगाभ्रपूर्व-
सुगतिविद्रव्यविध्वक्षरै- । भक्त्याऽनेकप-
दस्य तत्पदमितिः शेपांगबाह्यं श्रुतम् ॥१॥

पठति पाठयतीत्याखिलं श्रुतं ।
सकलमूलगुणव्रजमञ्जुलः ॥
य इह तं मुनिपाठकमाह्वये ।
ललितबोधकलाकलितान्तरम् ॥ १ ॥

ॐ ह्रौं पठकपरमेष्ठिन् अत्रागच्छागच्छ
संवौषट् आह्वानम् ॥

चारुतरश्रुतसंपठनाप्त- ।
स्वानुभवश्रुतवर्द्धितमोदम् ॥
त्वामिह पाठकमुत्तमभक्तः ।
स्थापयति प्रतिपत्तिनिमित्तम् ॥ ३ ॥

ॐ ह्रौं पाठकपरमेष्ठिन् अत्र तिष्ठ! तिष्ठ! ठः ठः
स्थापनम्

वल्गुतमप्रशमेन धृता किं? ।
मूर्तिरियं विरतं हि यदङ्गम् ॥
सन्निहितं विदधामि समृद्धं ।
पाठकमच्छसमाधिसमुद्रम् ॥ ४ ॥

ॐ ह्रौं उपाध्यायपरमेष्ठिन्! अत्र मम सन्निहितो
भव भव वषट् सन्निधापनम् ॥

॥ अथाष्टकम् ॥

वसन्ततिलकावृत्तम्

सज्जाह्नवीजलजसज्जनवज्जलस्य
माधुर्यशैत्यसुरभित्वपवित्रमस्य ।
धारात्रयेण चरणं शरणं मुनीनां
श्रीपाठका गुणवतां भवतां पुनामि १

ॐ ह्रौं उपाध्यायपरमेष्ठिने जलं निर्वपामीति स्वाहा

अन्तर्निदाघदमनीं कमनीयविद्यां
तां शिक्षयेति वदतेव नदद्द्विरेफैः।
कर्पूरपूरवरकेशरगन्धसार-
लेपेन पाठकपदं विशदीकरोमि ॥ २ ॥

ॐ ह्रौं उपाध्यायपरमेष्ठिने चन्दनं निर्वपामीति स्वाहा

तत्तद्गतैः सुविषयैर्विषयिव्रजस्य
प्रीतिप्रदैरशकलैः कलमाक्षतौघैः।
अंशैर्बहिर्गतिमितैरिव चित्कलायाः
श्रीपाठकक्रममिमं वयमर्चयामः ॥ ३ ॥

ॐ ह्रौं उपाध्यायपरमेष्ठिने अक्षतान् नि०

सौरभ्यकृष्टतरगुञ्जदलीद्विजाति-
सत्केतकीबकुलनीपपयोजपुञ्जैः।
सौरभ्यकृत्यामिव शिक्षितुमीहमानैः
श्रीपाठकक्रमयुगं वयमर्चयामः ॥ ४ ॥

ॐ ह्रौं उपाध्यायपरमेष्ठिने पुष्पं निर्वपामीति स्वाहा

इक्ष्वाज्यदुग्धदधिसाल्पुपदंशकालि-
शाल्योदनैर्वटकमौद्गिकमोदकाद्यैः।
हेमादिभाजनगतैः स्फुटदुद्धबाष्पैः
श्रीपाठकर्षिचरणं चरुभिर्यजामि ॥ ५ ॥

ॐ ह्रौं उपाध्यायपरमेष्ठिने नैवेद्यं नि०

ध्वान्तापहारिकिरणप्रसरैः प्रदीपै-
स्तेजोगुणस्फुटयशोभिरिव क्षितीशैः।
सद्धेमभाजनगतामितसुन्दरोरु-
स्नेहैर्यजामि जिनपाठकपादपद्मम् ॥६॥

ॐ ह्रौं उपाध्यायपरमेष्ठिने दीपं निर्वपामीति स्वाहा

सन्धूपिताखिलदिशैर्घनशङ्कयेह
बर्हिव्रजस्वनटनादिव नर्तयद्भिः।
मृद्वग्निसङ्गतिततागरुधूपधूमैः
श्रीपाठकक्रमयुगं वयमामहामः ॥७॥

ॐ ह्रौं उपाध्यायपरमेष्ठिने धूपं निर्वपामीति स्वाहा

सद्बीजपूरकसुदाडिमनालिकेरैः
कम्राम्रपक्वकदलीफलपूगकाद्यैः।
सेवाऽस्य सत्फलमथीति विभावयद्भिः
श्रीपाठकक्रमयुगं वयमामहामः ॥८॥

ॐ ह्रौं उपाध्यायपरमेष्ठिने फलं निर्वपामीति स्वाहा

गङ्गातरङ्गहिमजीवनगन्धसार-
शाल्यक्षतोद्गमचरूत्तमदीधूपैः।
दूर्वायुतैर्विशददर्भदलैः फलैः स-

दुत्तारयामि वरपाठकमर्घ्यमुच्चैः ॥ ९॥
ॐ ह्रौं उपाध्यायपरमेष्ठिने अर्घ्यं निर्वपामीति स्वाहा

पूर्वाङ्गसङ्गततरश्रुतनाट्यधाम्नि
सत्याम्बरेण विवृता रसना यदीया।
सन्नर्तकीव नरिनर्त्यथ दर्शयन्ती
भावान् वसन्तु सुखदा हृदिपाठकास्ते १०

ॐ ह्रौं उपाध्यायपरमेष्ठिने पूर्णार्घ्यं नि०

शार्दूलविक्रीडितच्छन्दः

शुद्धाराधनसाधनव्रतसमित्याचारगुप्त्यादिकान्
यत्रानेकशिवप्रदाचरणमित्याकीर्त्तितं योगिनां
आचारांगमिदं पदैः खखनभोवस्वेकसंख्यैर्मितं
यः पापठ्य पिपाठयत्युरुकृपस्तं पाठकं संयजे १

ॐ ह्रौं ज्ञाताचाराङ्गोपाध्यायपरमेष्ठिने अर्घ्यं
निर्वपामीति स्वाहा ॥

निःशेषव्यवहारधर्मकरणं छेदः प्रतिष्ठापनं
स्वास्वश्रितसमयस्वरूपकथनं यत्र स्थितं वर्त्तते।
अंगं सूत्रकृतं पदैः परिमितं खाभ्राभ्रषदत्रिप्रमैः
यः पापठ्य पिपाठयत्युरुकृपस्तं पाठकं संयजे २

ॐ ह्रौं ज्ञातसूत्रकृतांगोपाध्यायपरमेष्ठिने अर्घ्यं
निर्वपामीति स्वाहा ॥

एकद्वित्रिचतुःप्रभृत्यवयवैर्जीवादिवस्तुस्थितिः
स्यादेकादितदुत्तरक्रमणतो यत्र स्थिता कीर्त्तिता
स्थानांगं तदिदं पदैः परिमितं खव्योमखद्व्यब्धि-[४२०००]
मैर्यः पापठ्य पिपाठयत्युरुकृपस्तं पाठकं संयजे ३

ॐ ह्रौं ज्ञातस्थानांगोपाध्यायपरमेष्ठिने अर्घ्यं
निर्वपामीति स्वाहा ॥

जीवाद्यर्थकथायथार्थमुदिता सादृश्यसामान्यतो
द्रव्यक्षेत्रविशिष्टभावसमयद्वारेण यत्रोच्चकैः ।
अंगं तत्समवायनाम खखखाब्धींदुश्रुमाश्रितपदं[१६४०००]
यः पापठ्य पिपाठयत्युरुकृपस्तं पाठकं संयजे ४

ॐ ह्रौं ज्ञातसमवायाङ्गोपाध्यायपरमेष्ठिने अर्घ्यं
निर्वपामीति स्वाहा ॥

भिन्नं वस्तु किमस्त्यभिन्नमिति सत्प्रश्नाः कृता
गौतमैः। याताः षष्टिसहस्रमानममला यत्रो-
च्चकैः कीर्त्तिताः॥ व्याख्याप्रज्ञपनांगमभ्रख-
नभोष्टद्विद्विप्रमाधृत्पदं[२२८०००] । यः पापठ्य पि० ॥५॥

ॐ ह्रौं ज्ञातव्याख्याप्रज्ञप्त्यंगोपाध्यायपरमेष्ठिने
अर्घ्यं निर्वपामीति स्वाहा ॥

सद्रत्नत्रयधर्मभेदकथनं तीर्थङ्करादेः कथा

यत्राघक्षयकारिणी खलु कथा सा ज्ञातृधर्मादिका। अङ्गं षष्ठमिदं पदैः [५५६०००] खखंखषड्भूतेषुभिः संस्थितं यः पापठ्य पिपाठयत्युरुकृपस्तं पाठकं संयजे ॥ ६ ॥

ॐ ह्रौं ज्ञातज्ञातृधर्मकथांगोपाध्यायपरमेष्ठिने अर्घ्यं निर्वपामीति स्वाहा ॥

यत्रैकादशदर्शनादिविभिदा व्यावर्णनं तन्यते स्यादङ्गं तदुपासकाध्ययनमित्याख्यातदानार्चनम् ॥ सप्तांगं प्रमितं पदैः खखनभःसप्तैकैचन्द्रप्रभै- [११७०००] । यः पापठ्य पिपाठयत्युरुकृपस्तं पाठकं संयजे ॥ ७ ॥

ॐ ह्रौं ज्ञातोपासकाध्ययनांगोपाध्यायपरमेष्ठिने अर्घ्यं निर्वपामीति स्वाहा ॥

अन्ते केवलवित्तिनिर्वृतिकृतां सोढ्वोपसर्गं समं । तीर्थं प्रत्युरु वर्ण्यते प्रशमिनामुच्चैर्दशानां कथा ॥ खाभ्राभ्रैर्मितमन्तकृद्दशमि- [२३२८०००] भद्दित्रिद्विकैस्तत्पदै- । यः पापठ्य पिपाठयत्युरुकृपस्तं पाठकं संयजे ॥ ८ ॥

ॐ ह्रौं ज्ञातान्तकृद्दशांगोपाध्यायपरमेष्ठिने अर्घ्यं निर्वपामीति स्वाहा ॥

तीर्थं प्रत्युपसर्गमुग्रमृषयः सोढ्वादशान्ते युजा
प्राणत्यागमवाप्य यान्ति विजयादीन् ये तदा-
त्मोपदिक् ॥ द्युद्योखाब्धिभिरित्यनुत्तरदशं [९२४४०००] वेद-
द्भिरन्भ्रैः पदै- । यः पापठ्य पिपाठयत्युरुकृ-
पस्तं पाठकं संयजे ॥ ९ ॥

ॐ ह्रौं ज्ञातानुत्तरोपपादकदशांगोपाध्यायपरमेष्ठिने
अर्घ्यं निर्वपामीति स्वाहा

लाभालाभसुखासुखाजयजयादिप्रश्नसंकीर्त्तनं
यद्धाप्रष्टमहच्चतुर्विधकथोद्योतीकरं सप्रभित् ॥
प्रश्नव्याकरणं खखाभ्रविधुभात्रिंच्छैद्रभाम्भृ- [९३१६०००]
त्पदं । यः पापठ्य पिपाठयत्युरुकृपस्तं पाठकं
संयजे ॥ १० ॥

ॐ ह्रौं ज्ञातप्रश्नव्याकरणांगोपाध्यायपरमेष्ठिने
अर्घ्यं निर्वपामीति स्वाहा ॥

द्रव्यक्षेत्रविशिष्टभावसमयौजस्त्वाज्वलत्क-
र्मणां । तीव्रातीव्रतया शुभाशुभरसो व्याव-
र्ण्यते यत्र तत् ॥ खाभ्राभ्रैस्तुविपाकसूत्र-
मिति खाभ्राब्ध्यष्टसोमैः [१८४०००००] पदै- । यः पापठ्य०

ॐ ह्रौं ज्ञातविपाकसूत्रांगोपाध्यायपरमेष्ठिने अर्घ्यं
निर्वपामीति स्वाहा ॥११॥

